

Printed by Crishnarao Sakharam Pather, at the Laxmi
Narayan Press, 402, Thakurdwar, Bombay
Published by Nathuram Premi Honrery Secretary
Manickchandra D. Jains Granth Mala
Hirabag Near C. P. Tenk Bombay,





श्रीयुत्त लाला निहालालजी सी टी
मास्टर ग० हाईस्कूल अमराहा।

The Jain Vijay Printing Press Surat

# श्रीयुक्त लाला बिहारीलालजी।

आप अग्रवालजातीय दिगम्बर जैन हैं। बुलन्दशहरके रहने वाले हैं और अमरोहाके गवर्नमेंट हाईस्कूलमें मास्टर हैं। बड़े ही योग्य हैं। जैनधर्मके आप अच्छे जानकार हैं। उर्दूके नामी लेखक हैं। सन् १८९७ से १९०५ तक आप 'दिलआराम' नामक उर्दूका पत्र निकालते रहे हैं। उर्दूमें आपने २०–२५ ग्रन्थ लिखे हैं। जैनधर्मका प्रचार करनेकी ओर आपकी बहुत रुचि है। जैनसमाजको आपके द्वारा बहुत लाभ पहुँच रहा है। आपने एक 'जैनधर्मसंरक्षिणीसभा' स्थापित कर रक्खी है जो बहुत अच्छा काम कर रही है।

आपके पुत्र चिरंजीवि शान्तिचन्द्रजी भी बड़े धर्मप्रेमी और होनहार युवक हैं। आपने धर्मप्रचार करनेके लिए इस ग्रंथकी लगभग २५० प्रतियाँ लेनेकी कृपा करके इस संस्थाको बहुत ही उपकृत किया है।

# निवेदन।

स्वर्गीय दानवीर सेठ माणिकचन्द हीराचन्दजी जे. पी. के कृती नामको स्मरण रखनेके लिए कौनसा कार्य किया जाय, जिस समय इस विषयपर विचार किया गया उस समय यही निश्चय किया गया कि उनके नामसे एक ग्रन्थमाला निकाली जाय जिसमें संस्कृत और प्राकृतके प्राचीन ग्रन्थोंके प्रकाशित करनेका प्रबन्ध किया जाय। ग्रन्थोंका प्रकाशित करना और उनका प्रचार करना, यह सेठजीका बहुत ही प्यारा कार्य था, अतएव उनके स्मारकमें भी यही कार्य किया जाना सबने पसन्द किया और तदनुसार स्मारकफण्डकमेटीकी सम्मतिसे यह कार्य शुरू कर दिया गया। कमेटीने इस कार्यके लिए एक स्वतन्त्र समिति भी बना दी जिसकी अनुमतिसे ग्रन्थोंका चुनाव, आमद खर्चकी व्यवस्था आदि कार्य सम्पादित होते हैं।

ग्रन्थमालाके दो अंक एक साथ ही प्रकाशित किये जाते हैं। मुझे आशा थी कि सागारधर्मामृत जल्दी तैयार हो जायगा, परन्तु कई कारणोंसे इसके प्रकाशित होनेमें देरी हो गई और इसी कारण यह पहले नहीं किन्तु दूसरे अंकके रूपमें प्रकाशित होता है। आगेके लिए कवि हस्तिमल्लकृत विक्रान्तकौरवीय नाटक, और महाकवि वादिराजसूरिकृत 'पार्श्वनाथचरित' ये दो ग्रन्थ तैयार कराये जा रहे हैं जो सम्भवतः दो दो महीनेके अन्तरसे प्रकाशित हो जायँगे।

ग्रन्थमालाका प्रत्येक ग्रन्थ लागतके मूल्यपर बेचा जायगा, यह निश्चय हो चुका है, इसलिए यह आशा नहीं कि ग्रन्थमालामें कुछ मुनाफा रहेगा जिसके द्वारा यह कार्य स्थायीरूपसे चलता रहेगा। इसके सिवाय इसका फण्ड भी इतना नहीं है जिसके ब्याजसे इसका खर्च चलता रहे, अतएव

धर्मात्मा भाइयोंको चाहिए कि एक तो ग्रन्थमालाके ग्राहकों बढानेका प्रयत्न करें और दूसरे इसके द्वारा प्रकाशित हुए ग्रन्थोंकी सौ सौ पचास पचास, या कमसे कम दस दस पाँच पाँच प्रतियाँ खरीदकर जैनसंस्था ओंको, विद्यार्थियोंको, निर्धनोंको और अन्यधर्मी विद्वानोंको दान कर दिया करें। यदि जैनसमाजके धर्मात्माओंने इस ओर ध्यान दिया, तो हम विश्वास दिलाते हैं कि इस संस्थाके द्वारा सैकड़ों दुष्प्राप्य और दुर्लभ जैनग्रन्थोंका उद्धार हो जायगा और चिरकालसे उपेक्षित जैनसाहित्य भी एक गणनीय साहित्य समझा जाने लगेगा।

हीराबाग, बम्बई।
कार्तिक सुदी ७
सं० १९७२

निवेदक—
नाथूराम प्रेमी।
( ऑनरेरी मंत्री )

# पंडितप्रवर आशाधरः ।

( हिन्दीभाषातः संस्कृतेऽनुवादः कारितः )

अथ श्रीविद्वच्छिरोमणिः व्याघ्रेरवाल-( बघेरवाल ) जातिदिशा निजैर्जन्मना भूषयाचकार, अतएवास्य आशाधरेति सार्थकं नामास्ति । तस्य पितुर्नाम सल्लक्षणो मातुश्च श्रीरत्नी इति प्रथितम् । जन्म चास्य माण्डलगढे यस्मिन् समये मेवाडराज्येऽन्तर्गतं, ग्याशिल्येचन्द्रेन्दुमित १२३० विक्रम सवत्सरे निरन्तर्वर्तिनि कस्मिंश्चित्समये बभूव। एकोनपञ्चाशदधिकद्वादशशत ( १२४९ ) विक्रमाब्दे गजनापत्तनस्थशहाबुद्दीनगोरीनामकेन तुरुष्कराजेन पृथ्वीराजनृपचन्द्र निजवधने कृत्वा इन्द्रप्रस्थ ( दिल्ली ) स्वकीयराजधानी स्थापिता। तदैव च तेन अजमेराख्यप्रान्ते आक्रमितं । यवनानां महदत्याचारेभ्यः धर्मनाशभयेन तत्क्षणे पंडितवरस्य पूज्यपितरः सकुटुम्बः मालवीयराजधान्यां धारापुर्यां न्यवसन् । तदा तत्र परमारवंशीयस्य प्रतापिनो विन्ध्यवर्मनृपस्य राज्यमासीत् । एष विन्ध्यनरेन्द्रो विजयवर्मेत्याख्ययापि प्रथितः ।

आशाधरस्य पिता सल्लक्षण ( सल्लखण ) भूरि बहुसमानित इत्यनुमीयते । अर्जुनवर्मदेवमहाराजस्य द्वासप्तत्यधिकद्वादशशतपरिमित ( १२७२ ) विक्रमाब्दीयमेकं दानपत्रमुपलब्धमस्ति यदमरेश्वरतीर्थे समर्पितम् । तदन्ते च " महासान्धिविग्रहिकराजा सल्लखणसमतेन राजगुरुणा मदनेन" इति लिखितमस्ति । अनेन ज्ञायते यत् आशाधरस्य पिता सल्लखणाख्य अर्जुनवर्मदेवनृपस्य सान्धिविग्रहिकमन्त्री ( फोरेन सेक्रेटरी ) बभूव स च राजसदसी उपस्थाऽऽसीत् ।

अर्जुनवर्मा विन्ध्यवर्मणः पौत्रः सुभटवर्मणस्तनूज आसीत् । अस्य राज्यसमयो विक्रमीयसप्तषष्ठ्यधिकद्वादशशताब्दतः एकद्विवर्षं पूर्वं पश्चाद्वाऽपि इति कल्प्यते ।

आशाधरस्य रमणी सरस्वतीति नाम्ना प्रख्याता । तस्या कुक्षितः छाहडाख्यसूनुरभवत् यस्य प्रशंसा तैरेव स्वयंकृता लिखिता चास्ति यत् महाराजार्जुनदेवा अपि तद्गुणेऽनुरक्ता आसन् ।

यदाऽऽशाधरो धारापुरीं समागतस्तदा तदायुर्विंशतिवर्षेभ्योऽधिकमासीत्। तैर्जैनेन्द्रव्याकरणस्य जैनन्यायशास्त्राणां चाध्ययनं धारायामेवागत्य कृतमिति धर्मामृतप्रशस्तितोऽवगम्यते। एतानि ग्रन्थानि तेन विदुषा विद्वद्वरमहावीराख्योपाध्यायात् श्रीवादिराजपण्डितधरसेनशिष्यादधीतानि। विषयान्तराणामध्ययनं कुत्र कस्माच्च कृतमिति नावगम्यते। विद्याध्ययनानन्तरं तेन संसारयात्रानिर्वाहाय व्यापारं राजसेवा चेत्यादि किं कार्यमनुष्ठितमत्र विषये किमपि न निर्णीयते परमिति त्वनुमीयते यत्तस्याखिलं जीवनं विद्यासेवन एव व्यतीतं स्यात्। व्याकरण काव्य कोश-न्याय वैद्यक धर्मशास्त्रादिविषयेषु तस्यासाधारणा गतिरासीत्। एषु अखिलेषु विषयेषु तेन शतानि विद्यार्थिनो निष्णापिताः। एतत् ग्रन्थप्रशस्तेर्नवमश्लोके तट्टीकायां च केषांचिन्निजशिष्याणामुल्लेखं करोति कथयति च यदेतादृशा अनेके जना मया विद्वांसोऽनुष्ठिताः। यथा-पण्डित देवचन्द्रादयो व्याकरणज्ञाः कृताः। वादीन्द्रविशालकीर्त्यादीन् षड्दर्शनन्यायज्ञान् विधाय परवादिषु विजयं कारिताः। भट्टारकदेवचन्द्रविनयचन्द्रादयः धर्मशास्त्रमध्यापयित्वा मोक्षमार्गे प्रवर्तिताः। मदनोपाध्यायादींश्च साहित्यज्ञान् विधायार्जुनदेवमहाराजा सहृदयनृपाणां प्रतिष्ठाधिकारिणः (राजगुरवः) कारिताः। एभिः कारणैः श्रीआशाधरस्य पाण्डित्यमतितरामित्यनुमीयते।

विन्ध्यवर्मणः सान्धिविग्रहिकमन्त्रिणा महाकविबिल्हणेन एकदा श्रीआशाधरस्य महती प्रशंसा कृता। तेनोक्तं हे आर्य युष्माभिः सह स्वाभाविकं सहोदर्यं भ्रातृत्वं चास्ति, यतो यथा यूयं सरस्वती (शारदा) पुत्रस्तथाहमपि सरस्वती (मातृ) पुत्रोऽस्मि। विक्रमाङ्कचरित कर्णसुन्दरीनाटकादिकर्ता विद्यापतिर्बिल्हण आशाधरप्रशंसाकर्तुरस्माद्बिल्हणकवीशाद्भिन्नोऽस्ति। विद्यापतिबिल्हणेन विक्रमीयसंवत् विंशत्यधिकैकादशशत ११२० मिते काश्मीरनरेशकलशाख्यस्य राज्यसमये काश्मीरदेशस्त्यक्तः। अयं च बिल्हणो विन्ध्य रेन्द्रसमये विक्रमीयपञ्चाशदधिकद्वादशशता १२५० ब्दानुमिते जीवित आसीत्। आशाधरेण स्वीयप्रशंसाकर्त्रोरुभयोर्विदुषोर्नामनी अन्येऽपि दत्ते ययोरेक उदयसेनो मुनिर्द्वितीयश्च मदनकीर्तियतिपतिरासीत्। उदयसेनेन स

व्याघेरवालवरवंशसरोजहंसः काव्यामृतौघरसपानसुतृप्तगात्रः नयविश्वचक्षुः कलिकालिदास इतिविशेषणैर्विशेषितः। एवं मदनकीर्तिनापि 'प्रज्ञापुञ्ज' इत्युक्त्वा तस्य स्तुतिः कृता। उदयसेनमुनेः कश्चिदपि विशेषपरिचयो न मिलितः, परं तु मदनकीर्तिविषयेऽधुना कतिचित् वृत्तान्तानि अवगतानि सन्ति। श्वेताम्बराचार्यराजशेखरसूरिणा पञ्चाधिकचतुर्दशशतविक्रमाब्दे १४०५ निर्मिते 'चतुर्विंशतिप्रबन्ध'स्यैतिहासिकग्रन्थे एको 'मदनकीर्ति प्रबन्धनामकोऽध्यायो वर्तते। तेन ज्ञायते यत् मदनकीर्तिः वादीन्द्रविशालकीर्तेः शिष्य आसीत्। स विद्वन्मणी बभूव। चतसृणामपि दिशानां वादिनः पराजित्य तेन महाप्रामाणिकेति पदमधिष्ठितम्। एकदा स गुरुणा निषिद्धो दक्षिणापथं प्रस्थितः विजयमनुतिष्ठन् कर्णाटकदेशं प्राप्तः। तत्र विजयपुरनरेशः कुन्तिभोजस्तस्याद्भुतकाव्योपरि मोहितो जातः तस्माच्च सकाशात् स्वीयपूर्वजचरितविषयक एको ग्रन्थो निर्मापितवान्। मदनकीर्तिः पद्यरचनया यदाब्रवीत् तदैव च राजकन्या मदनमञ्जरी अपि पटान्तरे स्थिता तानि पद्यानि लिखति स्म। केषुचिद्दिनेषु व्यतीतेषु तयोः परस्परं प्रेमाविर्भूतं एको द्वितीयं मनसा इच्छति स्म। नृपेणेदं वृत्तमवगतं। तेन कुपितेन मदनकीर्तिवधायाज्ञा दत्ता परन्तु तदर्थं कन्यापि मर्तुं सन्नद्धा तदा विवशेन राजा स शान्तः, तौ च विवाहसूत्रेण बद्धौ। मदनकीर्तिः गृहस्थो भूत्वा स्थितः अवसानावस्थापर्यन्तमपि गृहस्थ एव आसीत्। विशालकीर्ति गुरुणा बहु प्रबोधितः परं किमपि फलं न जातं। मदनकीर्तेः कीदृशी दशा अभूदित्यनेनास्माकं न किमपि प्रयोजनं। अत्र तु तस्य विद्वत्तायाः सम्बन्धोऽस्ति। अस्मिन् विषये न कोऽपि सन्देहः यत् स दिग्गजविद्वानासीत्। तेन चाशाधरस्य प्रशंसा कृताऽऽसीत्। उपरि एकस्मिन् स्थले यस्य मदनोपाध्यायस्योल्लेखः आगतः यमाशाधरः काव्यशास्त्रे निपुणं कृतवान् स पूर्वोक्तमदनकीर्तितो भिन्न एव। मदनोपाध्यायोऽर्जुनवर्मदेवस्य गुरुरासीत्। तस्योपनाम बालसरस्वतीत्यासीत्। अर्जुनवर्मदेवेन स्वकृतामरुशतकटीकायामनेकस्थलेषु लिखितं " उक्तं चोपाध्यायेन बालसरस्वतीत्यपरनाम्ना मदनेनेति। " आशाधरेणापि

स्वोपज्ञधर्मामृतटीकायां 'स बालसरस्वती महाकविमदन' इति कथित । तेन निर्मिता 'पारिजातमञ्जरी' नाम्नी एका नाटिकास्ति ।

विक्रमीयपञ्चषष्ठ्यधिकद्वादशशतपरिमिताब्दे १२६५ आशाधरेण धारा नगरीं त्यक्त्वा नलकच्छपुरे च गत्वाऽऽवास कृत । यमधुना 'नालछा' इति कथयन्ति । नलकच्छपुरं धारात क्रोशदशक दूरे वर्तते तत्र श्रावकाणां निवासो विपुल आसीत् । तदा मालवप्रान्तस्य नृपोऽर्जुनवर्मदेव आसीत् ।

नलकच्छपुरं गत्वा निवासकरणमाशाधरो जिनधर्मोद्योतनेच्छां प्रकटयति । अनेन ज्ञायते यदस्मिन् समये तेन गृहस्थाश्रमात्मनस्त्यक्त । स च कश्चिदुच्चप्रतिमाधारक श्रावक इव निवसतिस्म । तन्निर्मितजिनसहस्रनाम स्तोत्रस्य निम्नश्लोकै प्रतीयते यत्स गृहस्थाश्रमादुदासीनो जात ।—

प्रभो भवाङ्गभोगेषु निर्विण्णो दुःखभीरुक ।
एष विज्ञापयामि त्वां शरण्यं करुणार्णवम् ॥ १ ॥
सुखलालसया मोहाद् भ्राम्यन्बहिरितस्तत ।
सुखैकहेतोर्नामापि तव न ज्ञातवान् पुरा ॥ २ ॥
अद्य मोहग्रहावेशशैथिल्यात्किंचिदुन्मुख ।
अनन्तगुणमाप्तेभ्यस्त्वां श्रुत्वास्तोतुमुद्यत ॥ ३ ॥

ज्ञायते यदाशाधरोऽन्तिमसमयपर्यन्त नलकच्छपुरे एव न्यवसत् । तन्निर्मितेषु ग्रन्थेषु अनागारधर्मामृतस्य टीका निखिलग्रन्थेभ्य पश्चादर्थात् त्रयोदशशत विक्रमाब्दे १३०० रचितास्ति, सा च नलकच्छपुरस्थनेमिनाथचैत्यालये पूर्णता गता । तस्मादन्येऽपि प्रायग्रन्था तत्पुरे एव रचिता सन्ति ।

आशाधर त्रयोदशशतविक्रमाब्दत १३०० पश्चात् कदापर्यन्त जीवित इति बोद्धुं किमपि साधनं नास्ति । तथापि तेन महदायु प्राप्तं स्यात् । पूर्वोक्त स्वकाले स वृद्ध एव जात स्यात् । तेन धारागमनानन्तर मालवदेश नृपपञ्चक सिंहासनासीन दृष्ट भवेत् । विन्ध्यवर्मसमये धारा समागत । विन्ध्यवर्मणस्तनुज सुभटवर्मा जात । सुभटवर्मसूनुरर्जुनवर्मण समये स नलकच्छपुरमागत ।

अर्जुनवर्मणः सोऽपि पुत्रो नासीत् अतस्तस्य पितामहजयवर्मणो भ्रातुर्लक्ष्मीवर्मणः पौत्रो देवपालः साहसमल्लापराख्यो राज्यसिंहासनं लब्धवान्। अस्यैव देवपालस्य समये आशाधरेण स्वीयजिनयज्ञकल्पः ( प्रतिष्ठापाठ ) रचयित्वा समाप्तिं नीतम्। देवपालानन्तरं तत्पुत्रो जैतुगिदेवो जयसिंहापराख्यो राजा बभूव। सागारधर्मामृतस्य टीका षण्णवत्यधिकद्वादशशतविक्रमाब्दे १२९६ अनागारधर्मामृतस्य टीका त्रयोदशशतविक्रमाब्दे १३०० यदा समाप्तिमगात्तदा जैतुगिदेवस्यैव शासनकाल आसीत्। आशाधरो निजग्रन्थप्रशस्तिषु स्वनिर्मित निम्नलिखितग्रन्थानामुल्लेखं करोति–

१ प्रमेयरत्नाकर ( न्यायग्रन्थ )।

२ भरतेश्वराभ्युदयकाव्य–स्वोपज्ञटीकासहित।

२ धर्मामृतशास्त्र—अस्य द्वौ भागौ स्तः। एको अनगारो द्वितीयः सागरः। द्वावपि भागौ स्वोपज्ञटीकासमलङ्कृतौ। सागारभागस्यैका पञ्जिकानाम्नी टीकापि स्वोपज्ञास्ति।

४ अष्टाङ्गहृदयोद्योतिनी टीका—इयं वाग्भटसंहिताख्यसुप्रसिद्धवैद्यकग्रन्थस्य टीकाऽस्ति।

५ आराधनासारटीका।

६ इष्टोपदेशटीका*—इयं पूज्यपादकृतेष्टोपदेशस्य टीका।

७ अमरकोषस्य क्रियाकलापटीका।

८ भूपालचतुर्विंशतिका टीका।

९ काव्यालङ्कारटीका—रुद्रटस्य प्रख्यातालङ्कारग्रन्थस्य टीका।

१ जिनसहस्रनाम सटीकम्।

११ जिनयज्ञकल्प सटीकम्।

१२ त्रिषष्टिस्मृतिशास्त्र सटीकम्।

१३ नित्यमहोद्योतम्।

१४ राजीमतीविप्रलम्भकाव्यं सटीकम्।

१५ अध्यात्मरहस्यं ( योगशास्त्र )।

१६ रत्नत्रयविधानम्।

अनेनेति सम्भाव्यते यत् त्रयोदशशताब्द्याः पश्चात् तेनान्येषामपि ग्रन्थानां रचना कृता स्यात्। येषामुल्लेख एतत्प्रशस्तिषु नास्ति। पूर्वोक्तेषु ग्रन्थेषु मध्येऽधुना जिनयज्ञकल्प, सागारधर्मामृत, अनागारधर्मामृत, जिनसहस्रनाम, नित्यमहोद्योत, इष्टोपदेश इत्यादयो ग्रन्था उपलभ्यन्ते। शेषग्रन्थानामन्वेषणं भवितव्यम्।

आशाधरस्य रचनातीवक्लिष्टास्ति ज्ञायते चात एव तेन प्रायः स्वनिर्मितसमस्तानामपि ग्रन्थानामुपरि टीका लिखिता सन्ति। एतत्सागारधर्मामृतस्य तु तेन द्वे टीके रचिते तथापि तस्य कृतौ तदसाधारणपाण्डित्यमनुमीयते।

अन्यग्रन्थमपेक्ष्य तस्यायं ग्रन्थोऽपि अतीव महनीयोऽस्ति, अनेनैव च सार्वजनीनाय प्रकाश्यते, श्रावकाचारेष्वन्य ईदृग्विस्तृतो विशदश्च ग्रन्थो नास्ति। इति कृतं पल्लवितेन।

निवेदक

नाथूरामप्रेमी।

---

मल्लिखितविद्वद्रत्नमालायामाशाधरविषये एको विस्तृतो लेखोऽस्ति, ये महाशया दिदृक्षवस्ते 'जैनग्रन्थरत्नाकर आफिस, हीराबाग, बम्बई' इति स्थानात् आनाय्य पठन्तु।

नमो वीतरागाय।

## सटीकं

# सागारधर्मामृतम् ।

श्रीवर्द्धमानमानम्य मन्दबुद्धिप्रबुद्धये ।
धर्मामृतोक्तसागार-धर्मटीकां करोम्यहम् ॥ १ ॥
समर्थनादि यन्नात्र ब्रुवे व्यासभयात्कचित् ।
तज्ज्ञानदीपिकाख्यैतत्पञ्जिकायां विलोक्यताम् ॥ २ ॥

अथ चतुर्थाध्याये—

सुदृग्बोधो गलद्वृत्तमोहो विषयनिःस्पृहः ।
हिंसादेर्विरतः कार्त्स्न्याद्यतिः स्याच्छ्रावकोंऽशतः ॥

इत्युक्तम्। अतो मध्यमङ्गलविधानपूर्वकं विनेयान्प्रति सागारधर्मामृतं प्रतिपाद्यतया प्रतिजानीते—

अथ नत्वाऽर्हतोऽक्षूणचरणान् श्रमणानपि ।
सद्धर्मरागिणां धर्मः सागाराणां प्रणेष्यते ॥ १ ॥

टीका—प्रणेष्यते प्रतिपादयिष्यतेऽस्माभिः । कः, [1]उत्कर्मतापन्नः धर्मः एकदेशविरतिलक्षणं चारित्रम् । केषां, सागाराणां वक्ष्यमाणलक्षणानां गृहस्थानाम् । किंविशिष्टानां, सद्धर्मरागिणां तेषां श्रमणानां धर्मे सर्वविरतिरूपे चारित्रे रागिणां संहननादिदोषादकुर्वतामपि प्रीतिमताम्, यतिधर्मानुरागरहितानामगारिणां देशविरतेरप्यसम्यग्रूपत्वात् । सर्वविरतिलालसः खलु देशविरतिपरिणामः । किं कृत्वा प्रणेष्यते, नत्वा शिरःप्रह्वीकरणादिना विशुद्धमनोनियोगेन च पूजयित्वा । कान्, अर्हतस्तीर्थंकरपरमदेवान् । किंवि

[1] प्रणयनक्रियाकर्मतापन्नः ।

ज्वराश्च अनाद्यविद्यादोषोत्थचतुःसञ्ज्ञाज्वराः तैरातुराः कदर्थिताः । यत एवम्भूतास्ततः शश्वत्स्वज्ञानविमुखाः । अत एव च नित्यं विषयोन्मुखाः. स्वपरप्रकाशात्मकत्वादात्मनो विमुखाः ॥ २ ॥

भङ्ग्यन्तरेण तानेवाह—

अनाद्यविद्यानुस्यूतां ग्रन्थसञ्ज्ञामपासितुम् ।
अपारयन्तः सागाराः प्रायो विषयमूर्च्छिताः ॥ ३ ॥

टीका—अत्रापि भवन्तीति क्रियाध्याहारः । एवमग्रेऽप्यमाणं क्रियापदं पुरस्तादप्यध्याहार्यम् । भवन्ति । के ते, सागाराः । किंविशिष्टाः विषयमूर्च्छिताः, कामिन्यादिविषयेषु ममेदं भोग्यमहमस्य स्वामीत्येवं ममकाराहङ्कारविकल्पपरतन्त्रतयाऽध्यवसिताः । कथं प्रायो, बाहुल्येन सुदृष्टयोऽपि चारित्रावरणकर्मोदयवशादेव पर्यवमत्ताः सम्यग्दृष्टय । ये तु केचिज्जन्मान्तराभ्यस्तरत्नत्रयानुभावात्साम्राज्यादिश्रियमप्यनुभवन्तोऽमेनीनाथोपभोगन्यायेन तत्त्वज्ञानदेशसंयमप्रणिधानपरत्वेन भुञ्जाना अप्यभुञ्जानवदवभासन्ते तद्व्यभिचारप्रदर्शनार्थं प्राय इत्युच्यते । किं कुर्वन्तस्ते तथा भवन्तीत्याह—अपारयन्त अशक्नुवन्त । किं कर्तुं, अपासितुं निराकर्तुं । कां, ग्रन्थसञ्ज्ञां ग्रन्थे परिग्रहे सञ्ज्ञा ममेदमिति मूर्च्छापरिणामस्ताम् । किंविशिष्टां, अनाद्यविद्ययाऽनुस्यूतां बीजाङ्कुरन्यायेन सन्तत्या प्रवर्तमानां ताम् ॥ ३ ॥

एवं सागारान् लक्षयित्वा तद्भावाभावनिदानयोरविद्याविद्ययोर्ज्ञोपदेशार्थमिदमाह—

नरत्वेऽपि पशूयन्ते मिथ्यात्वग्रस्तचेतसः ।
पशुत्वेऽपि नरायन्ते सम्यक्त्वव्यक्तचेतनाः ॥ ४ ॥

टीका—पशूयन्ते हिताहितविवेकाविकलतया पशव इवाचरन्ति । के ते, मिथ्यात्वग्रस्तचेतस मिथ्यात्वेन विपरीताभिनिवेशेन ग्रस्तमाविष्टं चेतो

---

१ धात्रीबालासतीनाथ पद्मिनीदलवारिवत् ।
दग्धरज्जुवदाभाति भुञ्जानोऽपि न पापभाक् ॥
२ वपुर्गृहं धनं दारा पुत्रमित्राणि शत्रवः ।
सर्वथान्यस्वभावानि मूढः स्वानि प्रपद्यते ॥

विद्विकृते । केषां, अन्येषां सञ्ज्ञिपञ्चेन्द्रियाणां । तथा शल्यति यद्दुःखहेतुत्वाच्छरीरान्त.प्रविष्टकाण्डादिवदाचरति । किं तत्, मिथ्यात्वं । किमाख्यं, सांशयिकं मिथ्यात्वकर्मोदये सति ज्ञानावरणोदयविशेषवशात् किमिदं जीवादि वस्तु यथा जैनैरनेकान्तात्मकमुच्यते तथा स्यादुतस्विदन्यथेति चलिता प्रतीतिः संशयः, संशये भव सांशयिकं क्वचिदप्राप्तनिश्चयमात्मस्वरूपं । केषां तत्तथा स्यादित्याह–परेषाम् इन्द्राचार्यादीनाम् ॥ ५ ॥

सत्त्वविघातमूलमिथ्यात्वनिर्मथनसमर्थस्य सम्यक्त्वपरिणामस्य कतमा प्रादुर्भावनसामग्रीत्यनुयोगे सतीदमुच्यते—

आसन्नभव्यताकर्म-हानिसञ्ज्ञित्वशुद्धिभाक् ।
देशनाद्यस्तमिथ्यात्वो जीवः सम्यक्त्वमश्नुते ॥ ६ ॥

टीका—अश्नुते प्राप्नोति । कोऽसौ, जीव आत्मा । किं तत्, सम्यक्त्वं तत्त्वार्थश्रद्धानं । किंविशिष्टः सन्, आसन्नभव्यताकर्महानिसञ्ज्ञित्वशुद्धि भाक्, भव्यो रत्नत्रयाविर्भावयोग्यो जीवः, आसन्नः कतिपयभवप्राप्यनिर्वाणपद, आसन्नश्चासौ भव्यश्चासन्नभव्यस्तस्य भाव आसन्नभव्यता, कर्महानिर्मिथ्यात्वादीनां सम्यक्त्वप्रतिबन्धककर्मणां यथासम्भवमुपशमः क्षयोपशम क्षयो वा, सञ्ज्ञा शिक्षाक्रियालापोपदेशग्राहित्व सञ्ज्ञाऽस्यास्तीति सञ्ज्ञी सञ्ज्ञिनो भावः सञ्ज्ञित्वं,

मनोऽवष्टम्भतः शिक्षा क्रियालापोपदेशवित् ।
येषां ते सञ्ज्ञिनो मर्त्याः वृषकीरगजादयः ॥ इति ।

शुद्धिर्विशुद्धपरिणाम, आसन्नभव्यता च कर्महानिश्च सञ्ज्ञित्वं च शुद्धिश्चेतीतरेतरयोगे द्वन्द्वे सति ताश्चतस्रो भजते सेवते ततो नोपतीति तद्बाह्यान्तरङ्गसम्यग्दर्शनादिभावकारणसम्पन्न इत्यर्थः । पुनः किंविशिष्टः, देशनाद्यस्तमिथ्यात्वः. देशना सम्यग्गुरूपदेशः सा आदिर्यस्य जातिस्मरणजिनप्रतिमादर्शनादेर्बहिरङ्गकारणकलापस्य स देशनादि तेन अस्तं निराकृतमुपशमाद्यवस्थां नीतं मिथ्यात्वं दर्शनमोहाख्यं कर्म तद्धेतुको वा सर्वथैकान्ताभिनिवेशो यस्य स तथोक्तः ॥ ६ ॥

साम्प्रतं योऽयं सम्यक्त्वसामग्र्याः सम्यक् सद्गुरूपदेशोऽवश्यमुपयुक्तस्तस्येदानीमत्र सदुपदेष्टॄणां प्रविरलत्वानुशोचनद्वारेण दुर्लभत्वं दर्शयति—

कलिप्रावृषि मिथ्यादिङ्मेघच्छन्नासु दिक्ष्विह ।
खद्योतवत्सुदेष्टारो हि द्योतन्ते क्वचित्क्वचित् ॥ ७ ॥

टीका—द्योतन्ते प्रकाशन्ते आत्मानं दर्शयन्ति स्वपरान्वा इत्यर्थः । के ते, सुदेष्टारः सु शोभनं निर्दोषं सम्पूर्णं वा जीवादितत्त्वं दिशन्त्युपदिशन्तीति सुदेष्टारः सम्यग्गुरवः । क्वचित्क्वचित्, क्वापि क्वापि न सर्वत्र । क्वास्मिन्, इह भरतक्षेत्रे । किंवत्, खद्योतवत् ज्योतिरिङ्गणा यथा । कासु सतीषु, दिक्षु सदुपदेशेषु ककुप्सु च । किंविशिष्टासु, मिथ्या सर्वथैकान्तविषयत्वादसत्या दिशो बौद्धादीनामुपदेशास्त एव मेघा दिक्तामिस्रानेकान्तोपदेशनाच्छादकत्वात् तैश्छन्नासु छादितासु प्रतीत्यविषयीकृतासु । क्व, कलिप्रावृषि कलिः दुःषमाख्यः पञ्चमकालः स एव प्रावृट् वर्षाकालस्तत्र । अयमर्थः—यथा वर्षाकाले मेघाच्छादितासु दिक्षु सूर्यादिप्रकाशाभावे क्वचित्क्वचित्प्रदेशे खद्योता द्योतन्ते तथेह दुःषमायां क्वचित्क्वचित्प्रदेशे सदुपदेष्टारः प्रकाशन्ते न पुनः कृतयुगादिष्विव प्रचुरा गणधरादयः केवलिनो वा दृश्यन्ते इति । हि शब्देन कष्टार्थे आत्मनस्तापमभिव्यनक्ति ।

इह दुःषमासमयसामर्थ्यादतिदुर्लभोपदेष्टॄणामपि दर्शयन्नोपदेष्टॄणामभिप्रायान्तरं देशनार्हश्राविकाणां भव्या अपि दुर्लभा देशनायां भूयाद्गुणिभ्याशास्ते—

नाथामहेऽद्य भव्यानां नयेऽत्र किमु सद्दृशाम् ।
हेम्न्यलभ्ये हि हेमाश्मलाभाय स्पृहयेन्न कः ॥ ८ ॥

टीका—नाथामहे प्रार्थयामहे अपि श्रोतॄन् देशनार्हान् भूयाद्गुणिभ्याशास्महे । के, वयं । केषां, भव्यानामपि । किमु, किं पुनः । सतां सम्यग्दृशां विशेषतो

१ विद्वन्मन्यतया सदस्यतितरामुद्दण्डवाग्डम्बराः
शृङ्गारादिरसैः प्रमोदजनकं व्याख्यानमातन्वते ।
ये ते च प्रतिसद्म सन्ति बहवो व्यामोहविस्तारिणो
येभ्यस्तत्परमात्मतत्त्वविषयं ज्ञानं तु ते दुर्लभाः ॥

नायामह इत्यर्थः । च, अत्र क्षेत्रे । कदा, अद्य अस्मिन्काले । अमुमेवार्थमुत्तरार्द्धेन समर्थयते । हि यस्माद्धेतोः । को न स्पृहयेत् नाभिलषेत् । कस्मै, हेमाश्मलाभाय सुवर्णोपलप्राप्त्यर्थं । क सति हेम्नि सुवर्णे । किंविशिष्टे, अलभ्ये लब्धुमशक्ये ॥ २ ॥

भद्रकस्य लक्षणमुक्त्वा तस्यैव द्रव्यतया देशनार्हत्वमाह—

कुधर्मस्थोऽपि सद्धर्मं लघुकर्मतयाऽद्विषन् ।
भद्रः स देश्यो द्रव्यत्वा-न्नाभद्रस्तद्विपर्ययात् ॥ ९ ॥

टीका–भण्यते । कोऽसौ, भद्रः । किं कुर्वन् अद्विषन् द्वेषविषयमकुर्वन् । कं, सद्धर्मं सन् समीचीनः प्रमाणोपपन्नो धर्मोऽभ्युदयनिःश्रेयसोपायस्तम् । कया, लघुकर्मतया लघु अल्पं कर्म सद्धर्मद्वेषनिमित्तं मिथ्यात्वं यस्य सोय लघुकर्मास्तस्य भावस्तत्ता तया लघुकर्मतया । किंविशिष्टोऽपि, कुधर्मस्थे प्रमाणबाधिते धर्मे आसक्तः, न केवलमुभयोर्मध्यस्थ इत्यपिशब्दार्थः । किं पुनरसाविस्याह–देश्य धर्मे स्य पादनीय । कोऽसौ स भद्रः । कस्मात् द्रव्यत्वात् आगामिसम्यक्त्वगुणयोग्यत्वात् । न पुनर्देश्य । कोऽसौ अभद्र कुधर्मस्थ सद्धर्मं गुरुकर्मतया द्विषन् कस्मात्, आगामिसम्यक्त्वगुणयोग्यत्वाभावात् ।

इदानीमाप्तोपदेशसम्पादितशुश्रूषादिगुणः सम्यक्त्वहीनोऽपि तद्वानिव सद्भूतव्यवहारभाजां प्रतिभासते इति निदर्शनेन व्यक्तीकरोति—

शलाकयेवाप्तगिराऽऽप्तसूत्र-
प्रवेशमार्गो मणिवच्च यः स्यात् ।
हीनोऽपि रुच्या रुचिमत्सु तद्वद्
भूयादसौ सांव्यवहारिकाणाम् ॥ १० ॥

टीका–य पुरुषः स्यात् भवेत् । किंविशिष्टः, आप्तसूत्रप्रवेशमार्ग एव । चशब्दस्यात्रावधारणार्थस्य योजनात् । सूत्र परमागमः, प्रवेशमार्गः शुश्रूषादिगुणः, सूत्रस्य प्रवेशमार्गोऽन्तस्तत्त्वपरिच्छेदनोपायः सूत्रप्रवेशमार्गः, आप्तः प्राप्तः सूत्रप्रवेशमार्गो येन स तथोक्तः । कया, आप्तगिरा सद्गुरुवाचा । कयेव, शलाकयेव छिद्रकरवज्रसूचिकया यथा । किंवत्, मणिवत् यथा मणिः शलाकया आप्तप्रवेशमार्गः स्यात्, आप्तः प्राप्तः सूत्रस्य तन्तोः प्रवेशमार्गः छिद्रं येन स

तथोक्तं । असौ भूयात् प्रतिभासेत । किंवत्, तद्वत् रश्मिमानिव । केषां सांव्यवहारिकाणां सुनयप्रयोक्तॄणाम् । केषु मध्ये, रश्मिमत्सु सुदृष्टिषु दीप्तिमन्मणिषु च मध्ये । किंचिद्विशिष्टोऽपि हीनोऽपि रिक्तोऽल्पो वा । कया, रश्म्या युक्त्या दीप्त्या किं पुनः रश्मिसम्पन्न इत्यपिशब्दार्थः । एतेनाप्युत्पन्नसम्यक्त्वानां सुदृष्टिषु च मध्ये गणनीयतोपदिष्टा । सुदृष्टिवत्तेऽपि सतां मान्या भवन्तीति भावः ।

एवं देशव्रतेऽशक्तौ व्यवस्थाप्य सागारधर्मचारिणमगारिणं रूपयितुमाह—

> न्यायोपात्तधनो यजन् गुणगुरून् सद्गीस्त्रिवर्गं भज-
>
> न्नन्योन्यानुगुणं तदर्हगृहिणीस्थानालयो ह्रीमयः ।
>
> युक्ताहारविहार आर्यसमितिः प्राज्ञः कृतज्ञो वशी
>
> शृण्वन् धर्मविधिं दयालुरघभीः सागारधर्मं चरेत् ॥११॥

टीका—अत्र 'पूज्याश्चार्हं' इत्यनेनार्हे सप्तमी । चरितुमर्हतीत्यर्थः । विधौ वा, यथोक्तगुणेन गृहिणा सागारधर्मश्चरितव्य इत्यर्थः । अत्र पूर्वो भद्रक उत्तरो द्रव्यपाक्षिक इति विभागः । चरेत् अनुतिष्ठेत् । कोऽसौ, 'न्यायोपात्तधन' इत्यादिविशेषणैश्चतुर्दशभिः समस्तैर्व्यस्तैर्वा विशिष्टो गृही । कं, सागारधर्ममिति वाक्यार्थः । इतो विशेषणानि व्याख्यायन्ते । न्यायोपात्तधनः, स्वामिद्रोहमित्रद्रोहविश्वसितवञ्चनचौर्यादिगर्ह्यार्थोपार्जनपरिहारेणार्थोपार्जनोपायभूतः स्वस्ववर्णानुरूपः सदाचारो न्यायः तेनोपात्तमुपार्जितमात्मसात्कृतं धनं विभवो येन स तथोक्तः । यजन्, गुणगुरून्, गुणाः सदाचारसौजन्यौदार्यदाक्षिण्यधैर्यप्रियपूर्वकथनाभिमा-

---

१ सर्वत्र शुचयो धीराः स्वकर्मबलगर्विताः ।
स्वकर्मनिहितात्मानः पापाः सर्वत्र शङ्किताः ॥
अन्यायोपार्जितं वित्तं दशवर्षाणि तिष्ठति ।
प्राप्ते चैकादशे वर्षे समूलं च विनश्यति ॥
यान्ति न्यायप्रवृत्तस्य तिर्यञ्चोऽपि सहायताम् ।
अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति ॥

२ लोकापवादभीरुत्वं दीनाभ्युद्धरणादरः ।
कृतज्ञता सुदाक्षिण्यं सदाचारः प्रकीर्तितः ॥

षणादय स्वपरोपकारिण आत्मधर्मास्तान् पूजयन् बहुमानप्रशसासाहाय्यकरणादिना समुल्लासयन्, तथा गुरवो मातापितरावाचार्यश्च तानपि पूजयन् त्रिसन्ध्यप्रणामकरणादिनोपचरन्, तथा गुणैर्ज्ञानसयमादिभिर्गुरवो महान्तो गुणगुरवस्तानपि भजन् सेवाऽभ्यासनाभ्युत्थानादिकरणगणेन मानयन्, गुणाश्च गुरवश्च गुणगुरवश्चेति विगृह्यैकशेषेण गुणगुरवस्तान् । सद्गी, सती प्रशस्ता परावर्णवादपारुष्यादिदोपरहिता गीर्वाग्यस्यासौ सद्गी । त्रिवर्गं भजन्नन्योन्यानुगुण, परस्परानुपघातक त्रिवर्गं धर्मार्थकामान् भजन् सेवमान । तदर्हगृहिणीस्थानालय, गृहिणी कौलीन्यादिगुणालङ्कृता पत्नी, स्थान पुरग्रामादि वास्तु च, आलया गृह, गृहिणी च स्थान च आलयश्च गृहिणीस्थानालया, तदर्हास्त्रिवर्गयोग्या गृहिणीस्थानालया यस्य स तथोक्त । ह्रीमय, लज्जाया विकृत इव लज्जाभूयिष्ठो वा । युक्ताहारविहार, युक्तौ शास्त्रविहितावाहारविहारौ भोजनविचरणे यस्य स ।

---

१ यन्मातापितरौ क्लेश सहेते सम्भवे नृणाम् ।
न तस्य निष्कृति शक्या कर्तुं वर्षशतैरपि ॥

२ यदिच्छसि वशीकर्तुं जगदेकेन कर्मणा ।
परापवादसस्येभ्यो गा चरन्ती निवारय ॥
परपरिभवपरिवादादात्मोत्कर्षाच्च बध्यते कर्म ।
नीचैर्गोत्र प्रतिभव मनेकभवकोटिदुर्मोचम् ॥

३ यस्य त्रिवर्गशून्यानि दिनान्यायान्ति यान्ति च ।
स लोहकारभस्त्रेव श्वसन्नपि न जीवति ॥
पादमायान्निधि कुर्यात्पाद वित्ताय खट्वयेत् ।
धर्मोपभोगयो पाद पाद भर्तव्यपोषणे ॥
आयार्द्ध च नियुञ्जीत धर्मे समधिक तत ।
शेषेण शेप कुर्वीत यत्नतस्तुच्छमैहिकम् ॥

४ अभ्युत्थानमुपागत गृहपतौ तद्भाषणे नम्रता
तत्पादार्पितदृष्टिरासनविधौ तस्योपचर्या स्वय ।
सुप्ते तत्र शयीत तत्प्रथमतो जह्याच्च शय्यामिति
प्राच्यै पुत्रि निवदिता कुलवधूसिद्धांतधर्मा इमे ॥

र्भुतेस्तामवश्यं कुर्वाण । अघभी, अघात्पापात् दृष्टादृष्टापायफला-त्कर्मणश्चौर्यादेर्मद्यपानादेश्च बिभ्यत् पापभीरुरित्यर्थः । एषा संक्षेपतो व्याख्याऽत्र कृता । विस्तरतो धर्मामृतपञ्जिकायां ज्ञानदीपिकासञ्ज्ञिकायां कृता, सा सर्वाऽत्र द्रष्टव्या ॥ ११ ॥

साम्प्रतं मन्दमतिविनेयानां सुखस्मृत्यर्थं सकलसागारधर्मं सङ्गृह्णाति—

> सम्यक्त्वममलममला-
> न्यणुगुणशिक्षाव्रतानि मरणान्ते ।
> सल्लेखना च विधिना
> पूर्णः सागारधर्मोऽयम् ॥ १२ ॥

टीका—भवति । अयं श्रूयमाणः सागारधर्मः । किंविशिष्टः, पूर्णः समग्रः । किं किमित्याह—सम्यक्त्वं तात्त्विकविशिष्टं, अमलं शङ्कादिदोषरहितं । तथा अणु-गुणशिक्षापूर्वाणि व्रतानि अणुगुणशिक्षाव्रतानि अणुव्रतानि गुणव्रतानि शिक्षाव्रतानि च । किंविशिष्टानि, अमलानि निरतिचाराणि । न केवलं निर-तिचारतत्त्वार्थश्रद्धानपूर्वाणि निरतिचाराणुव्रतादीनि किं तर्हि, मरणान्ते विधिना सल्लेखना चेत्ययं सम्पूर्णः श्रावकधर्मः । शेषविशेषणानां यथास्वमत्रै-वान्तर्भावात्तुल्यसमुच्चयार्थेन चशब्देन समुच्चयनाच । तत्र मरणमेवान्तः मरणान्तस्तत्क्षणमरणं, नत्वावीचिमरणं तस्य प्रतिक्षणं सर्वप्राणिषु भावात् । सल्लेखना सम्यक् लाभाद्यनपेक्षत्वेन लेखना, बाह्येनाभ्यन्तरेण च तपसा कायकषायाणां कृशीकरणम् । विधिस्तु सप्तदशाध्याये वक्ष्यते । ( यत्प्रति-समयमायुषः कर्मणो निषेकस्योदयपूर्विका निर्जरा भवति तदावीचिमरणम् )

असंयमिनोऽपि सम्यग्दृशः कर्मक्लेशापकर्षो भवतीत्युपदेशार्थमिदमाह—

> भूरेखादिसदृक्कषायवशगो यो विश्वदृश्वाज्ञया
> हेयं वैषयिकं सुखं निजमुपादेयं त्विति श्रद्दधत् ।
> चौरो मारयितुं धृतस्तलवरेणेवाऽऽत्मनिन्दादिमान्
> शर्माक्षं भजते रुजत्यपि परं नोत्तप्यते सोऽप्यघैः॥१३॥

दुर्निवारत्वात्स्वकाले विपच्यमानस्य कर्मणः । एतेन सम्यक्त्वग्रहणात्पूर्वमबद्धायुषोऽसंयतस्यापि सम्यग्दृष्टेः सुदेवत्वसुमानुषत्वव्यतिरेकेण सकलसंसारसंहरणात् कर्मक्लेशापकर्षः । बद्धायुषस्तु पश्चादगृहीतसम्यक्त्वस्य नरकगतेरपि रत्नप्रभायां जघन्यस्थित्यैवानुभवनसम्भवात् बहुदुःखोपरमश्च प्रतिपादितः प्रतिपत्तव्यः । ततः संयमलब्धिकालात्पूर्वं संसारभीरुणा भव्येन सम्यग्दर्शनाराधनायां नित्यं यतितव्यमिति विधौ पर्यवसन्नमेतत्सूत्रमधिगन्तव्यम् ॥

इदानीं धर्मशर्मयशसोऽपि मनःप्रसत्तिनिमित्तत्वात् शिष्टैरवश्यं सेव्यमित्युपदेष्टुमाह—

धर्मं यशः शर्म च सेवमानाः
केऽप्येकशो जन्म विदुः कृतार्थम् ।
अन्ये द्विशो विद्म वयं त्वमोघा-
न्यहानि यान्ति त्रयसेवयैव ॥ १४ ॥

टीका—विदुः जानन्ति । के, केऽपि लौकिकाः । किं तत्, जन्म मनुष्यभवग्रहणम् । किंविशिष्टं, कृतार्थं कृतः साधितोऽर्थः प्रयोजनं साध्यं यस्य तत् ॥ किं कुर्वाणाः, सेवमानाः कर्तव्यतानुरक्तबुद्ध्या साधयन्तः । कं, धर्मं सुकृतम्, यशः कीर्तिम्, शर्म सुखम् । कथम्, एकशः एकैकम् । केचिद्धर्ममात्रं केचिद्यशोमात्रं केचिच्च सुखमात्रं साधयन्तो वयं प्राप्तमनुष्यजन्मफला इति मन्यन्ते, नानारुचित्वाल्लोकस्य । तथा अन्ये लोकच्छन्दानुवर्तिनः शास्त्रज्ञम्मन्याः विदुः । किं, जन्म । किम्भूतं, कृतार्थम् । किं कुर्वाणाः, धर्मं यशः शर्म च सेवमानाः । कथं, द्विशः द्वे द्वे । केचिद्धर्मयशसी केचिद्धर्मशर्मणी केचिद्यशःशर्मणी च साधयन्तो जन्म फलवन्मन्यन्त इत्यर्थः । तर्हि युष्माकं किं मतमित्यत्राह-

---

१ दुर्गतावायुषोबन्धात्सम्यक्त्वं यस्य जायते ।
गतिच्छेदो न तस्यास्ति तथाप्यल्पतरा स्थितिः ॥

२ जन्मोन्माज्यं भजतु भवतः पादपद्मं न लभ्यं
तच्चेत्स्वैरं चरतु न च दुर्देवतां सेवतां सः ।
अश्नात्यन्नं यदिह सुलभं दुर्लभं चेन्मुधाऽऽस्ते
क्षुध्याकृत्यै कवलयति कः कालकूटं बुभुक्षुः ॥

न्तुविशेषे । विद्म जानीम । के ते, वयं लौकिकशास्त्रज्ञपरीतोपकारिण । कानि, अहानि दिनानि अर्थान्नृजन्मसम्बन्धीनि । किं कुर्वन्ति, यान्ति गच्छन्ति । किंविशिष्टानि, अमोघानि सफलानि । कया, त्रयसेवया धर्मयशःशर्मसाधनया, न पुनरेकैकस्य द्वयोर्द्वयोर्वा निर्वर्तनयेत्येवकारार्थं । एतेनाहरहर्यथाशक्ति-धर्मादित्रयं साध्यमिति विधिं प्रत्येयं ॥ १४ ॥

एवं भावितसम्यक्त्वस्य सयतत्वसामग्रीविरहे कालादिलब्धिलाभादवश्या-रोहणीयं संयतासंयतत्वपदं निर्देष्टुमाह—

मूलोत्तरगुणनिष्ठा-
मधितिष्ठन्पञ्चगुरुपदशरण्यः ।
दानयजनप्रधानो
ज्ञानसुधां श्रावकः पिपासुः स्यात् ॥ १५ ॥

टीका-स्यात् भवेत् । कोऽसौ, श्रावकः शृणोति गुर्वादिभ्यो धर्ममिति श्रावकः । किं कुर्वन्, अधितिष्ठन् उपयुञ्जानः । कां, मूलोत्तरगुणनिष्ठां मूलानि उत्तरगुणप्ररोहणनिमित्तत्वात् संयमार्थिभिः प्रागनुष्ठेयत्वाच्च उत्तरे मूलगुणान-न्तरसेव्यत्वादुत्कृष्टत्वाच्च, मूलानि च उत्तरे च मूलोत्तरास्ते च ते गुणाश्च संयमविकल्पाः तेषां निष्ठा निर्वाहो दृष्टफलनिरपेक्षतया निराकुलं वहन् । किम्भूतो भूत्वेत्याह—पञ्चगुरुपदशरण्यः, पञ्चानां गुरूणामर्हदादीनां पदानि चरणाः शरण्यानि शरणे आर्तिहरणे स्वात्मसमर्पणे वा साधूनि योग्यानि यस्य स तथोक्तः । एवं सम्यग्दर्शनपूर्वकं देशसंयममधितिष्ठतो दानयजना-ऽऽयमलक्षणमाचारं कर्तव्यतया दानेत्यादिना निर्दिशति—कीदृशस्तथाभूतः श्रावकः स्यात्, दानयजनप्रधानः दान—पात्रादिभिश्चतुर्धा, यजन—नित्य-महादियज्ञः पञ्चधा, दानं च यजनं च दानयजने प्रधाने मुख्ये यस्यासौ ।

---

१ जो तसवहादु विरदो अविरदओ तह य थावरवहादो ।
एकसमयह्मि जीवो विरदाविरदो जिणेक्कमइ ॥

२ ध्यानेन शोभते योगी संयमेन तपोधनः ।
सत्येन वचसा राजा गेही दानेन शोभते ॥

वार्ता तु श्रावकस्य गौणीति प्रधानग्रहणाल्लक्षयति । किं चेरिष्णु श्रावकः स्यात्, पिपासुः पातुमिच्छुः उपयोक्तुकामः । कां, ज्ञानसुधां स्वपरान्तरज्ञानामृतम् ।

एवं पञ्चमगुणस्थानं निर्दिश्य तद्विकल्पानां भावद्रव्यात्मनामेकादशानामुपासकपदानां मध्येऽन्यतमं विशुद्धदृष्टिर्महाव्रतपरिपालनलालसो यथास्वशक्ति च प्रतिपद्यते तमभिनन्दति—

राग्रादिक्षयतारतम्यविकसच्छुद्धात्मसंवित्सुख-
स्वादात्मस्वबहिर्बहिस्त्रसवधाद्यंहोव्यपोहात्मसु ।
सद्दृग्दर्शनिकादिदेशविरतिस्थानेषु चैकादश-
स्वेकं यः श्रयते यतिव्रतरतस्तं श्रद्दधे श्रावकम् ॥१६॥

टीका—श्रद्दधे साधु करोत्ययमिति प्रतिपद्येऽहम् । कं, तं श्रावकं । यः किं, यः श्रयते स्वीकुरुते । किं सत्, एकं पदं । केषु मध्ये, दर्शनिकादिदेशविरतिस्थानेषु एकादशसु वक्ष्यमाणेषु । कथम्भूतो भूत्वा, सद्दृक् सम्यग्दर्शनशुद्धः । पुनः किंविशिष्टः, यतिव्रतरतः यतीनामनगाराणां व्रतानि सर्वहिंसादिविरतिपरिणामास्तेषु रतः आसक्तः, सर्वविरतिकलशारोपणो हि श्रावकधर्मप्रासादः । किंविशिष्टेषु भावतस्तेष्वित्याह—रागादिक्षयतारतम्येत्यादि, क्षयः सर्वघातिस्पर्द्धकानामुदयाभावः अर्थाद्देशघातिस्पर्द्धकानामुदयः, तारतम्यं यथोत्तरमुत्कर्षः, रागादीनां रागद्वेषमोहानां क्षयतारतम्येन विकसन्ती आविर्भवन्ती चासौ शुद्धात्मसंवित् निर्मलचिद्रूपानुभूतिः सैव तदुत्थं वा सुखमानन्दस्तस्य स्वादः स्वसंवित्याऽनुभवः स एवात्मा स्वरूपं येषां तानि तदात्मानि तेषु । कः, एवंभूतेषु अबहिरध्यात्मं । तर्हि द्रव्यतः किंरूपेष्वित्याह-बहिः शरीरे वाचि मनसि च त्रसवधः आदिर्येषां स्थूलादीनां तानि त्रसवधादीनि तान्येव अंहांसि पापानि तत्फलत्वात्तेभ्यो व्यपोहो विधिपूर्वकं देवगुरुसधर्मसाक्षिकमपोहो विरतिः सैवात्मा एषां तानि तेषु । 'च' शब्दस्यात्र भिन्नक्रमस्य योजनात् ॥ १६ ॥

१ आयुःश्रीवपुरादिकं यदि भवेत्पुण्यं पुरोपार्जितं
स्यात्सर्वं न भवेन्न तच्च नितरामायासितेऽप्यात्मनि ।
इत्यार्याः सुविचार्य कार्यकुशलाः कार्येऽत्र मंदोद्यमा
द्रागागामिभवार्थमेव सततं प्रीत्या यतन्ते तराम् ॥

किं लक्षणास्ते दर्शनिकादयो भवन्तीत्युद्दिशति—

दृष्ट्या मूलगुणाष्टकं व्रतभरं सामायिकं प्रोषधं
सच्चित्तान्नदिनव्यवायवनितारम्भोपाधिभ्यो मतात् ।
उद्दिष्टादपि भोजनाच्च विरतिं प्राप्ताः क्रमात्प्राग्गुण-
प्रौढ्या दर्शनिकादयः सह भवन्त्येकादशोपासकाः ॥१७॥

टीका—भवन्ति । के, उपासका श्रावका । कति, एकादश । किंनामान दर्शनिकादय । दर्शनिकोऽथ व्रतिक इत्यादिना वक्ष्यमाणा । किं विशिष्टा-सन्त', प्राप्ता प्रतिपन्ना । किं तत्, दृष्ट्या मूलगुणाष्टकमित्यादिविरतिमित्यन्तं देशसंयमं।तथा हि-सम्यक्त्वेन विशिष्टं मूलगुणाष्टकं प्राप्तो दर्शनिक ,स एव च व्रतभरं निरतिचाराण्यणुव्रतादीनि प्राप्तो व्रतिक । एवमुत्तरेष्वपि सम्बन्ध कर्तव्य ।व्यवायो मैथुनम्, वनिता स्त्री , उपाधि परिग्रह , मतात् मदर्थं साधुकृतमनेनैवमित्यनुमोदितात्, अपि भोजनात् मताद्दुद्दिष्टाच भोजनादपि विरतिं प्राप्तोऽनुमतविरत उद्दिष्टविरतश्च,योऽनुमतमुद्दिष्टं च भोजनमपि न कुर्यात् स किमान्यत्रारम्भादौ पापकर्मण्यनुमति दद्यात्, उद्दिष्ट च वसत्याच्छादनादिकमुपयुञ्जीतेत्यपिशब्दाल्लभ्यते। कथ ते तत्पदं प्राप्ता , सह सार्धम् । कया, प्राग्गुणप्रौढ्या दृष्टिमूलगुणाष्टकप्रकर्षेण सह व्रतभरं, तत्रयप्रकर्षेण सामायिकमित्यादियुक्त्या ते तथा भवन्तीत्यर्थं । कस्मात्तथा भवन्ति, क्रमात् अभ्यासविषयाभ्यासासय-मभग्नमनस्कतया युगपत्तत्रासामर्थ्यात् ।

साम्प्रतं दुरितापचयनिमित्तेज्याद्विधर्मकर्मसिध्यर्थं कृष्यादिषट्कर्मलक्षण वार्तामाचरतो गृहस्थस्यावश्यभावी सावद्यलेश प्रायश्चित्तेन पक्षादिभिश्च निराकार्यं इत्युपदेशार्थमाह—

नित्याष्टाह्निकसच्चतुर्मुखमहः कल्पद्रुमैन्द्रध्वजा-
विज्याः पात्रसमक्रियान्वयदयादत्तीस्तपःसंयमान् ।
स्वाध्यायं च विधातुमादृतकृषीसेवावणिज्यादिकः
शुध्याऽऽप्तोदितया गृही मललवं पक्षादिभिश्च क्षिपेत् ॥

टीका—क्षिपेत् निराकुर्यात् । कोऽसौ, गृही गृहस्थ । कं, मललव पापले-
श, . कया, शुध्या प्रायश्चित्तेन । किंविशिष्टया, आप्तोदितया । न केवल तया

पक्षादिभिश्च पक्षचर्यासाधनैस्त्रिभि । किंविशिष्ट सन्, आदत्तकृषीमैत्रावणिज्यादिक आदत्तानि यथास्व प्रवर्तितानि कृषीमैत्रावणिज्यानि आदिशब्दान्मषीविद्याशिल्पानि च षडाजीवनकर्माणि येन स आदत्तकृषीमैत्रावणिज्यादिक । किं कर्तुं, विधातु कर्तुं करिष्याम्यहमित्यादीनि जिनागमप्रसिद्धानि पञ्च धर्मकर्माणीति अध्यवसाय । कानि तानीत्याह-नित्येत्यादि, नित्यमह *अष्टाह्निकमह सचतुर्मुखमह कल्पद्रुम ऐन्द्रध्वजश्चेति पञ्चार्हत्पूजाविशेषा इत्यर्था । चतुर्मुखस्य सर्वतोभद्रविशेषणाद्ब्रेशर्नामियमेव परमोत्कृष्ट कल्पवृक्षस्यासम्भवादिति प्रकाशयति । अत एवैन्द्रध्वजेन सह समस्यैव निर्दिष्ट । पात्रे-

उक्त च आर्य भगवज्जिनसेनपादै –
प्रोक्ता पूजार्हतामिज्या सा चतुर्धा सदार्चनम् ।
चतुर्मुखमह कल्प द्रुमश्चाष्टाह्निकोऽपि च ॥

१ तत्र नित्यमहो नाम शश्वज्जिनगृह प्रति ।
स्वगृहान्नीयमानाऽर्चा गन्धपुष्पाक्षतादिका ॥
चैत्यचैत्यालयादीना भक्त्या निर्मापण च यत् ।
शासनीकृत्य दान च ग्रामादीना सदार्चनम् ॥
या च पूजा मुनीन्द्राणा नित्यदानानुषङ्गिणी ।
स च नित्यमहो ज्ञेयो यथा शक्त्युपकल्पित ॥

* अष्टाह्निको मह सार्व जनिको रूढ एव स ।

२ महामुकुटबद्धैस्तु क्रियमाणो महामह ।
चतुर्मुख स विज्ञेय सर्वतोभद्र इत्यपि ॥

३ दत्त्वा किमिच्छुक दान सम्राड्भिर्य प्रवर्त्यते ।
कल्पवृक्षमह सोऽय जगदाशाप्रपूरण ॥

४ महानैन्द्रध्वजोऽन्यस्तु सुरराजै कृतो मह ॥
बलिस्नपनमित्यन्य त्रिसन्ध्यासवया समम् ।
उक्तेष्वेव विकल्पेषु ज्ञेयमन्यच्च तादृशम् ॥
एव विधविधानेन या महेज्या जिनेशिनाम् ।
विधिज्ञास्तामुशन्तीज्यां वृत्ति प्राथमकल्पिकीम् ॥
वार्ता विशुद्धवृत्त्या स्या कृष्यादीनामनुष्ठिति ।

त्यादि, समा आत्मना समाना क्रिया आधानादिका उपलक्षणान्मन्त्रव्रतादयश्च यस्यासौ समक्रिय, पात्रं च समक्रियश्च अन्वयश्च दया च पात्रसमक्रियान्वय-दयास्तदाश्रया दत्तयो दानानि तद्दत्तयस्ताः, पात्रदत्तिं समानदत्तिमन्वयदत्तिं दयादत्तिं च। तपोऽनशनादि संयमं व्रतधारणं। स्वाध्याय श्रुतभावनाम्।

किमेतत्पक्षादित्रयमित्याह—

स्यान्मैत्र्याद्युपबृंहितोऽखिलवधत्यागो न हिंस्यामहं
धर्माद्यर्थमितीह पक्ष उदितं दोषं विशोध्योज्झतः।
सूनौ न्यस्य निजान्वयं गृहमथो चर्या भवेत्साधनं
त्वन्तेऽन्नेहतनूज्झनाद्विशदया ध्यात्यात्मनः शोधनम्॥

टीका—स्यात् भवेत्। कोऽसौ, पक्षः अहिंसापरिणामत्वं। किमात्मा, अखिलवधत्यागः अखिलोऽनृतादिसहितो वधः प्राणातिपातः, स चेह सागारधर्मप्रक्रमात्त्रसवधविषय एव तस्य त्यागो वर्जनं। किंविशिष्टः, मैत्र्याद्युप-बृंहितो मैत्रीप्रमोदकारुण्यमाध्यस्थ्यभावनाभिरुपचितः। केन, न हिंस्यामहं

१ चतुर्धा वर्णिता दत्ति-र्दयादानसमाऽन्वयैः॥
सानुकम्पमनुग्राह्ये प्राणिवृन्देऽभयप्रदा।
त्रिशुध्यानुगता सेयं दयादत्तिर्मता बुधैः॥
महातपोधनायार्च्यां प्रतिग्रहपुरःसरम्।
प्रदानमशनादीनां पात्रदानं तदिष्यते॥
समानायात्मनाऽन्यस्मै क्रियामन्त्रव्रतादिभिः।
निस्तारकोत्तमायेह भूहेमाद्यतिसर्जनम्॥
समानदत्तिरेषा स्यात् पात्रे मध्यमतामिते।
समानप्रतिपत्त्यैव प्रवृत्ता श्रद्धयाऽन्विता॥
आत्मान्वयप्रतिष्ठार्थं सूनवे यदशेषतः।
समं समयवित्ताभ्यां स्ववर्गस्यातिसर्जनम्॥
सैषा सकलदत्तिः स्यात् स्वाध्यायः श्रुतभावना।
तपोऽनशनवृत्त्यादि संयमो व्रतधारणम्॥

धर्मार्थमित्येवम्प्रकारेण सङ्कल्पेन धर्मार्थं देवतार्थं मन्त्रसिध्यर्थमौषधार्थमाहारार्थं वा प्राणिघातं न कुर्यामिति प्रतिज्ञाय। अयं हि मन्दकषायोऽपि गृहवासमेवनरतत्वेन प्रवर्तितारम्भत्वादनारम्भजामेव साङ्कल्पिकीं हिंसां परिहर्तुं शक्नोति, न पुनरारम्भानुषङ्गिणीम्, तस्या गृहिणोऽवश्यम्भावात्। क्व पक्षः स्यात्, इह एतेषु पक्षादिषु मध्ये। तथा भवेत्। कोऽसौ, चर्या दर्शनिकाद्यारम्यानुमतिविरतं यावदुपासकाचार.। कस्य गृहिण। किं कुर्वत, उत्सृजत.। किं तत्, गृहं। किं कृत्वा, न्यस्य स्थापयित्वा। कं, निजान्वयं स्व पोष्यवर्गे धनं धर्म्यं च। क्व, सुनौ पुत्रे। तदसम्भवे तत्तुल्ये वंश्येऽपि। किं कृत्वा, विशोध्य विधिपूर्वकं प्रायश्चित्तेन शास्त्रोक्तविधानेन निराकृत्य। कं, दोषं हिंसादिकं। किंविशिष्ट,-मुदितं कृष्यादिद्वारेणोत्पन्नं। कथम्भूतो, पक्षसँस्कारानन्तरं वैराग्यपरिणामे प्रत्यहमारोहति सतीत्यर्थं। तथा भवेत्। किं तत्, साधनं। किं, शोधनं शुद्धी रागादिदोषापनयनं। कस्य, आत्मन चिद्रूपस्य। कया, ध्यात्या ध्यानेन। किं विशिष्टया, विशदया शुद्धया। कस्मात्, अनीहतनूज्झनात् अत्र चाहार ईहम शरीरचेष्टा तनुश्च शरीरमनीहतनवस्तासामुज्झनं नियतकालं यावज्जीवं च यथोचितं परित्यागात्स्मात्। क्व,अन्ते गृहत्यागावसाने मरणे चासन्ने। 'मु'शब्दादुदितं दोषं विशोध्येत्यनुवृत्त्यात्रापि योज्यम् ॥१९॥

इदानीं पक्षादिकल्पनाद्वारेण कृतावतारान् श्रावकस्य त्रीन् प्रकारानुद्दिश्य संक्षेपेण लक्षयन्नाह—

पाक्षिकादिभिदा त्रेधा श्रावकस्तत्र पाक्षिकः।
तद्धर्मगृह्यस्तन्निष्ठो नैष्ठिकः साधकः स्वयुक् ॥२०॥

टीका—भवति। कोऽसौ, श्रावक। कतिधा, त्रेधा त्रिविध। कया, पाक्षिकादिभिदा पक्षेण चरति दीव्यति जयति वा, पाक्षिक आदिर्यस्यासौ पाक्षिकादि, पाक्षिको नैष्ठिकः साधकश्चेति स एव तेन वा भिद् भेदो विकल्पकथनं पाक्षिकादिभिद् तया। तानेव लक्षणतो दर्शयति– तत्रेत्यादि, तत्र तस्यां पाक्षिकादिभिदि। भवति। कोऽसौ, पाक्षिक। किंरूप, तद्धर्मगृह्य. तस्य श्रावकस्य धर्म एकदेशहिंसाविरतिरूपं मत गृह्यं पक्ष प्रतिज्ञा-

विषयो यस्यासौ प्रारब्धदेशसंयम श्रावकधर्मस्वीकारपर इत्यर्थ । तथा भवति । कोऽसौ, नैष्ठिक निष्ठया चरति तत्र वा भव । किंविशिष्ट, तन्निष्ठ तत्र धर्मे निष्ठा निर्वहण यस्यासौ घटमानदेशसयमो निरतिचारश्रावकधर्म-निर्वाहपर इत्यर्थ । तथा भवति । कोऽसौ, साधक समाधिमरण साधयतीति साधक । किंविशिष्ट, स्वयुक् स्वस्मिन्नात्मनि युक् समाधिर्यस्यासौ निष्पन्न-देशसयम आत्मध्यानतत्पर इति भद्रम् ॥ २० ॥

इत्याशाधरविरचितायां स्वोपज्ञधर्मामृतसागारधर्मदीपिकायां
भव्यकुमुदचन्द्रिकासञ्ज्ञायामादितो दशम
प्रकरणमाद्य प्रथमोऽध्याय ।

---

# द्वितीयोऽध्यायः ।

एव सागारधर्म सूचयित्वा पाक्षिकाचारं प्रपञ्चयितुकाम प्रथम तावदा-दरस्य भव्यस्य सागारधर्माभ्युपगमो धर्माचार्यैरभ्यनुज्ञायते तादृश त दर्शयन्नाह—

त्याज्यानजस्र विषयान् पश्यतोऽपि जिनाज्ञया ।
मोहात्त्यक्तुमशक्तस्य गृहिधर्मोऽनुमन्यते ॥ १ ॥

टीका—अनुमन्यते क्रियतामित्यनुज्ञायते धर्माचार्यै[1] । कोऽसौ, गृहिधर्म । कस्य, अदीनस्य असमर्थस्य । किं कर्तुं, त्यक्तु । कान्, विषयान् इष्टकामिन्या-दीन् । कस्मात्, मोहात् अप्रत्याख्यानावरणलक्षणचारित्रमोहोदयोद्रेकात् । किं कुर्वतोऽपि, पश्यतोऽपि प्रतिपद्यमानस्य, न पुनरनन्तानुबन्धिरागादिपरतन्त्रत्व-स्सेव्यतयाऽभ्युपगच्छत इत्यपिशब्दार्थः । कान्, विषयान् । किंविशिष्टान्, त्याज्यान् असेव्यान् । कथम्, अजस्र शश्वत् । कया, जिनाज्ञया वीतरागसर्व-ज्ञानुलंघ्यशासनेन सम्यग्दर्शनशुद्धस्य सत इत्यर्थ । इदमत्र तात्पर्य, एकदेश-

---

1 विषयविषमाशनोत्थित-मोहज्वरजनिततीव्रतृष्णस्य ।
निःशक्तिकस्य भवत प्राय पेयाद्युपक्रम श्रेयान् ॥

विरतिमहं करिष्यामीति प्रतिपद्यमानो गृही सूरिभिरोमित्यनुज्ञायते । एतेन स्थावरवधानुमतिदोषानुषंगोऽप्याचार्याणां परिहृतो भवति ॥ १ ॥

अधुना पाक्षिकं दर्शनविशुद्धिमध्यासीनमहिंसामिध्यर्थं मद्यादिविरतौ नियुङ्क्ते–

तत्रादौ श्रद्दधज्जैनी-माज्ञां हिंसामपासितुम् ।
मद्यमांसमधून्युज्झे-त्पञ्च क्षीरिफलानि च ॥ २ ॥

टीका–उज्झेत् त्यजेत् । कोऽसौ, देशसंयमोन्मुखो गृही । कानि, मद्यमांसमधूनि, न केवलमेतानि पञ्च क्षीरिफलानि च क्षीरिणां पिप्पलादीनां पञ्चानां फलानि । च–शब्दान्नवनीतरात्रिभुक्त्यगालितपानीयादिकमप्युज्झेदित्यनुक्तं समुच्चितं प्रतयति । किं कर्तुं, अपासितुं त्यक्तुं । कां, हिंसां भावतो मद्यादिविषयरागरूपां द्रव्यतश्च तद्गतप्राणिप्राणव्यपरोपणलक्षणाम् । किं कुर्वन्, श्रद्दधत् । कां, आज्ञां । किंविशिष्टां, जैनीं जिनागममित्यर्थः । क्व, आदौ प्रथमतः । क्व, तत्र गृहिधर्मे । एतेनेदमुक्तं भवति, तादृग्जिनाज्ञाश्रद्धानेनैव मद्यादिविरतिं कुर्वन् देशव्रती स्यात् न कुलधर्मादिबुद्ध्या ॥ २ ॥

अथ स्वमतपरमताभ्यां मूलगुणान् विभजते–

अष्टैतान् गृहिणां मूल-गुणान् स्थूलवधादि वा ।
फलस्थाने स्मरेद् द्यूतं मधुस्थान इहैव वा ॥ ३ ॥

टीका–स्मरेत् स्मृतिविषयीकुर्यात् । कोऽसौ, मूलगुणस्थापनोद्यतः सूरिः । कान्, मूलगुणान् । केषां, गृहिणां । किंविशिष्टान्, एतान् उपासकाध्ययनादि-

---

१ सर्वविनाशी जीवस्त्रसहनने त्याज्यते यतो जैनैः ।
स्थावरहननानुमतिस्तत कृता तैः कथं भवति ॥

२ मांसाशिषु दया नास्ति न सत्यं मद्यपायिषु ।
आनृशंस्यं न मर्त्येषु मधूदुम्बरसेविषु ॥

शास्त्रानुसारिभिः पूर्वमनुष्ठेयतयोपदिष्टान्। कान्, अष्ट मद्यमासमधुपञ्चोदुम्बरफलविरतिरूपान्। वा शब्दः पक्षान्तरसूचने। स्वामिसमन्तभद्रमते पुनः सूरिः स्मरेत्। किं तत्, स्थूलवधादि स्थूलहिंसानृतस्तेयमैथुनग्रन्थपञ्चकम्। क्व, फलस्थाने पञ्चोदुम्बरफलप्रसङ्गे तन्निवृत्तौ या मद्यमासमधुविरतित्रय पञ्चाणुव्रतानि चाष्टौ मूलगुणान् स्मरेदित्यर्थः। पुनर्वाशब्दः पक्षान्तरसूचने। महापुराणमते तु-स्मरेत्। किं तत्,द्यूतं। क्व,मधुस्थाने। कस्मिन् इहैव अस्मिन्नेव स्वाम्युक्ताष्टमूलगुणपक्षे मद्यमासद्यूतविरतित्रय पञ्चाणुव्रतानि चाष्टौ मूलगुणान् स्मरेदित्यर्थः। स्मरेदित्यनेन न च सर्वत्र यमनियमादौ भुवस्त्वे स्मरणपरेण भवितव्यमिति लक्षयति ॥

सम्प्रति मद्यस्य जन्तुभूयिष्ठतानुवादपुरस्सरमुपयोक्तृणामुभयलोकबाधकत्वमुपदर्श्यावश्यत्याज्यतामभिधत्ते—

> यदेकबिन्दोः प्रचरन्ति जीवा-
> श्चेत्तत् त्रिलोकीमपि पूरयन्ति ।
> यद्विक्लवाश्चेममुं च लोकं
> यस्यन्ति तत् कश्यमवश्यमस्येत् ॥ ४ ॥

टीका—अस्येत् त्यजेत्। कोऽसौ, स्वहितैषी। किं तत्, कश्यं मद्यं। कथ, अवश्यं नियमेन मद्यविरतिमतं स्वीकुर्यादित्यर्थः। यत् पूरयन्ति

१ मद्यमांसमधुत्यागैः सहोदुम्बरपञ्चकैः ।
अष्टावेते गृहस्थानामुक्ता मूलगुणाः श्रुते ॥
(सोमदेव)

२ मद्यमांसमधुत्यागैः सहाणुव्रतपञ्चकम् ।
अष्टौ मूलगुणानाहुर्गृहिणां श्रमणोत्तमाः ॥
(समन्तभद्र)

३ हिंसासत्यस्तेयादब्रह्मपरिग्रहाच्च बादरभेदात् ।
द्यूतान्मांसान्मद्याद्विरतिर्गृहिणोऽष्ट सन्त्यमी मूलगुणाः ॥

४ मनोमोहस्य हेतुत्वान्निदानत्वाच्च दुर्गतेः ।
मद्यं सद्भिः सदा त्याज्यमिहामुत्र च दोषकृत् ॥
विवेकः संयमो ज्ञानं सत्यं शौचं दया क्षमा ।
मद्यात्प्रलीयते सर्वं तृण्या वन्हिकणादिव ॥

भ्रमन्ति। के ते, जीवाः। कां, त्रिलोकीमपि समस्तविष्टपमपि। क्व, तत्र तत्र। चे, यदि। प्रचरन्ति सञ्चरन्ति। के, जीवाः। कस्मात्, यदेकबिन्दोः यस्य मद्यस्यैकस्माद् बिन्दोः पृषतः सकाशात्, तज्जाः प्राणिनो यदि विचरेयुरित्यर्थः। यतश्च नश्यन्ति भ्रशयन्ति श्रेयो, ऽहितं कुर्वन्तीत्यर्थः। के ते, यद्विकृता येन मद्येन मोहितमनसः। कः, लोकः। किंविशिष्टं, ममुं, न केवलममुं च तद्भवमुत्तरभवं च दुःखमयं कुर्वन्तीत्यर्थः ॥ ४ ॥

इदानीं मद्यपानस्य द्रव्यभावहिंसानिदानत्वमनूद्य तन्निवृत्तिप्रवृत्तिशीलानां गुणदोषौ दृष्टान्तद्वारेण स्पष्टयन्नाह—

पीते यत्र रसाङ्गजीवनिवहाः क्षिप्रं म्रियन्तेऽखिलाः
कामक्रोधभयभ्रमप्रभृतयः सावद्यमुद्यन्ति च ।
तन्मद्यं व्रतयन्न धूर्तिलपरास्कन्दीव यात्यापदं
तत्पायी पुनरेकपादिव दुराचारं चरन्मज्जति ॥ ५ ॥

टीका—न याति न प्राप्नोति। कोऽसौ, पुरुषः। कां, आपदं विपदं। किं कुर्वन्, व्रतयन् व्रतं कुर्वन् अमद्यपकुलजातोऽपि देवादिसाक्षिकं निवर्तयन्नित्यर्थः। किं तत्, तत्प्रागुक्तं विनिपातप्रायं मद्यम्। क इव, धूर्तिलपरास्कन्दीव धूर्तिलनामा चोरो यथा। तत्पायी पुनर्मद्यपानशीलो मज्जति दुर्गतिदुःखे मज्जति। किं कुर्वन्, चरन् अनुतिष्ठन्। कं, दुराचारं अगम्यगमनाभक्ष्यभक्षणापेयपानादिकं। क इव, एकपादिव एकपान्नामपरिव्राजको यथा। यत्र किं, यस्मिन्मद्ये पीते सति। म्रियन्ते विपद्यन्ते। के ते, रसाङ्गजीवनिवहाः रसोऽङ्गं कारणं येषां ते रसाङ्गा रसजा इत्यर्थः, तथा रसस्याङ्गानि कारणानि रसाङ्गानि मद्ये रसजनका इत्यर्थः, रसाङ्गाश्च ते जीवाश्च रसाङ्गजीवास्तेषां निवहाः सङ्घाताः। किंवि

१ रसजानां च बहूनां जीवानां योनिरिष्यते मद्यम् ।
मद्यं भजतां तेषां हिंसा सञ्जायतेऽवश्यम् ॥
समुत्पद्य विपद्यन्ते देहिनोऽनेकशः किल ।
मद्ये भवन्ति कालेन मनोमोहाय देहिनाम् ॥

दिष्टा, अखिला समस्ता । कथ, क्षिप्र पानानन्तरमेव । तथा उद्यन्ति उत्पद्यन्ते । के ते, कामादय । क्व सति, यत्र पीते सति । कथ, सावद्य पापेन निन्दया वा सह । कामो योन्यादौ रिरसा, भ्रमो मिथ्याज्ञान चक्रारूढस्येव शरीरभ्रमण, कामश्च क्रोधश्च भय च भ्रमश्च कामक्रोधभयभ्रमा ते प्रभृतय प्रमुखा येषामभिमानहास्यारतिशोकादीना ते ॥ ५ ॥

अथाचारविशुद्धिगर्वितानां पिशिताशन गर्हमाण प्राह—

स्थानेऽश्नन्तु पलं हेतोः स्वतश्चाशुचिकश्मलाः ।
श्वादिलालावदप्यद्युः शुचिम्मन्याः कथं नु तत् ॥६॥

टीका—अश्नन्तु भक्षयन्तु । के ते, कश्मला जातिकुलाचारमलिना । कि तत्, पल मास । किविशिष्ट, अशुचि । कस्मात्, हेतो शुक्रशोणितलक्षणात् कारणात्, न केवल हेतो स्वतश्च स्वभावेन अमेध्यबीजममेध्यस्वभाव चेत्यर्थ । कथ, स्थाने युक्त कश्मलाना तथाप्रवृत्त्युपपत्ते । नु अहो । कथमपु कथ खादेयु गर्हामहे । अत्यन्तमयुक्तमेतत् । गर्हे सत्सङ्गत विधानात् । के ते, शुचिम्मन्या आचारविशुद्धमात्मान मन्यमाना । कि तत्, पल । किविशिष्ट, श्वादिलालावदपि श्वादीना कुक्कुरचित्रकश्येनादीना लाला मुखस्राव श्वादिलाला सा अस्मिन्नस्तीति श्वादिलालावत्, अथवा श्वादिलालया तुल्य श्वादिलालावत् कुक्कुरादिलालायुक्त तत्तुल्य वा । अपि विस्मये ॥ ६ ॥

साम्प्रत स्वयमेव पक्वस्य मासस्य पञ्चेन्द्रियस्य मत्स्यादेर्भक्षणमद्युपगमपुष्टे क्षमाणान् प्रत्याह–

हिंस्रः स्वयम्मृतस्यापि स्यादश्नन् वा स्पृशन्पलम् ।
पक्वापक्वा हि तत्पेश्यो निगोदौघसुतः सदा ॥ ७ ॥

---

१ भक्षयन्ति पलमस्तचेतना सप्तधातुमयदेहसम्भवम् ।
यद्वदन्ति च शुचित्वमात्मन किं विडम्बनमत परं बुधा ॥
यतो मांसाशिन पुंसो दमो दान दयार्द्रता ।
सत्यशौचव्रताचारा न स्युर्विद्यादयोऽपि च ॥

टीका—स्यात् भवेत् । कोऽसौ,पुमान् । किंविशिष्ट ,हिंस्रे द्रव्यहिंसादील । भावहिंसायास्तु मांसभक्षणे दर्पकरतरत्वेन वक्ष्यमाणत्वात् । किं कुर्वन्, अश्नन् खादन् स्पृशन् वा हस्तादिना संयोजयन् । किं तत्, पलं मांसं । कस्य, स्वयम्मृतस्यापि मीनादेः प्रथमं मन्तरेणापि व्यत्तप्राणस्य मत्स्यमहिषादेः किं पुनरात्मना वधितस्येत्यपिशब्दार्थः । कुत इत्याह हि यस्मात् । भवन्ति । का, तत्पेश्य तस्य पलस्य पेश्यः कोशाः । किंविशिष्टा , निगोदोपमुत निगोदाना साधारणानन्तजीवानामेकशरीरभेदत्वेनानन्तप्राणिनामोघाः सङ्घातास्तान् सुवन्ति जनयन्तीति निगोदोपसुत । किं कदाचित्स्ये आह—सदा सर्वदा । किंविशिष्टा सत्य , पक्वापक्वा पक्वाश्चापक्वाश्चेति विगृह्यैकशेषण पक्वापक्वा इत्यस्य व्यपदेशेन पक्वा आमा पच्यमानाश्चेत्यर्थ ॥ ७ ॥

अथ मांसस्य प्राणिहिंसाविरेकप्रभवत्वेनेन्द्रियदर्पकरतरत्वेन च भावहिंसाहेतुत्वानुवादपुरस्सरं तद्भक्षणं नरकादिगतिविवर्तननिमित्तत्वेनोपदिशन्नाह—

प्राणिहिंसार्पितं दर्पमर्पयत्तरसं तरां ।
रसयित्वा नृशंसः स्वं विवर्तयति संसृतौ ॥ ८ ॥

टीका—विवर्तयति द्रव्यक्षेत्रकालभावैः परिवर्तयति । कोऽसौ, नृशंस क्रूरकर्मकृत् । क, स्वं आत्मानं । क, संसृतौ संसारे । किं कृत्वा, रसयित्वा आस्वाद्य । किं तत्, तरसं मांसं । किंविशिष्टं प्राणिहिंसार्पितं पञ्चेन्द्रियजीव

---

१ अभिमानभयजुगुप्सा हास्यारतिकामशोकरोषाद्या ।
हिंसाया पर्याया सर्वेऽपि च नरकसन्निहिता ॥
न विना प्राणिविघातान्मांसस्योत्पत्तिरिष्यते यस्मात् ।
मांसं भजतस्तस्मात् प्रसरत्यनिवारिता हिंसा ॥
ये भक्षयन्त्यन्यपलं स्वकीयपलपुष्टये ।
त एव घातका यत्र वदको भक्षकं विना ॥
मांसास्वादनलुब्धस्य देहिनो देहिनं प्रति ।
हन्तुं प्रवर्तते बुद्धिः शाकिन्य इव दुर्धियः

२ आमां वा पक्वां वा खादति वा स्पृशति वा पिशितपेशीम् ।
स निहन्ति सततनिचितं पिण्डं बहुजीवकोटीनाम् ॥
आमास्वपि पक्वास्वपि विपच्यमानासु मांसपेशीषु ।
सातत्येनोत्पादस्तज्जातीनां निगोतानाम् ॥

वधसम्पादितं । किं कुर्वन्, अपेक्षन् सम्पादयन् । कं, दर्पं मदावेशं । कथं, तरां अतिशयेनेत्यव्ययमिदम् । मृष्टान्नादिभ्योऽतिशयेन प्राणिवधादुत्पन्नं तद्दर्पकरं चेत्यर्थः ॥ ८ ॥

इदानीं मांसाशिनः संकल्पिकस्यापि पलभक्षणस्य दोषं तद्विरतिनिष्ठायाश्च गुणमुदाहरणद्वारेण दर्शयति—

**भ्रमति पिशिताशनाभिध्यानादपि सौरसेनवत्कुगतीः ।**
**तद्विरतिरतः सुगतिं श्रयति नरश्चण्डवत्खदिरवद्वा ॥ ९ ॥**

टीका—भ्रमति परापरविवर्तैः परिवर्तयति । कोऽसौ, जीवः । काः, कुगतीः नरकादिभवग्रहणानि । कस्मात् पिशिताशनाभिध्यानादपि मांसभक्षणसंकल्पात्, किं पुनस्तद्भक्षणादित्यपिशब्दार्थः । किंवत्, सौरसेनवत् सौरसेनराजा तुल्यं । तथा श्रयति लभते । कोऽसौ, नरः । कां, सुगतिं स्वर्गादिगतिं । किंविशिष्टः सन्, तद्विरतिरतः पिशितनिवृत्तावासक्तः । किंवत्, चण्डवत् चण्डनामोऽन्त्यजो मातङ्गो यथा । अथवा खदिरवत् खदिरसारो नाम भिल्लराजो यथा ॥ ९ ॥

अधुना मांसं सतां भक्षणीयं प्राण्यङ्गत्वान्मुद्गादिवदित्यनुमानाभिधानमहामोहान्मांसभक्षणदक्षिणान् प्रत्याह—

**प्राण्यङ्गत्वे समेऽप्यन्नं भोज्यं मांसं न धार्मिकैः ।**
**भोग्या स्त्रीत्वाविशेषेऽपि जनैर्जायैव नाम्बिका ॥१०॥**

टीका—भोज्यं भोक्तव्यं । किं तत्, अन्नं मुद्गादिधान्यं रसरक्तविकारजत्वाभावात् । न तु भोज्यं । किं तत्, मांसं रसरक्तविकारजत्वात् । कैः, धार्मिकैः धर्ममहिंसारूपं चरद्भिः । क्व सति, प्राण्यङ्गत्वे जीवकायत्वे । किंविशिष्टे,

---

१ पञ्चेन्द्रियस्य कस्यापि वधे तन्मांसभक्षणे ।
यथा हि नरकप्राप्तिर्न तथा धान्यभोजनात् ॥
धान्यपाके प्राणिवधः परमेकोऽवशिष्यते ।
गृहिणां देशयमिनां स तु नात्यन्तबाधकः ॥
मांसस्वादकगतिं विमृशन्तः शस्यभोजनरता इह सन्तः ।
प्राप्नुवन्ति सुरसम्पदमुच्चैर्जैनशासनजुषो गृहिणोऽपि ॥

समेऽपि अत्रेमासयोस्तुल्येऽपि, न च प्राणिकायत्वाद्यम्यपि मासमुपकल्प्य, यो य प्राणिकाय स स मासमिनि व्यासेरभावात्। अन्यथा वृक्षत्वा द्दशोकादीनामपि निम्ब कल्पनाप्रसङ्गात्। यत भोग्या अनुभवनीया। काऽसौ, जायैव, न पुनरम्बिका माता भोग्या। कैर्जनै लोके। च सति, स्त्रीत्वाविशेषेऽपि भार्यामात्रो स्त्रीत्वे तुल्येऽपि ॥ १० ॥

अथ क्रमप्राप्तमधुदोषानाह—

मधुकृद्व्रातघातोत्थ मधवशुच्यपि बिन्दुशः ।
खादन् बध्नात्यघ सप्त ग्रामदाहांहसोऽधिकम् ॥ ११ ॥

टीका—बध्नाति आत्मना योजयति। कोऽसौ, पुमान्। किं तत्, अघ पाप। कियत्, अधिक अतिरिक्त। कस्मात् सप्तग्रामदाहाहम्म ग्राममसकृद्दाहकपातकवान्। किं कुर्वन्, खादन् भक्षयन्। कि तत् मधु क्षौद्र। किंमात्रमपि बिन्दुश बिन्दु मात्रमपि। किं विशिष्ट मधुकृता मक्षिकाभ्रमरमशकादीना मधुकरप्राणिना व्रात सङ्घस्तस्य घातो नाशस्तस्मादुत्था उत्पत्तिर्यस्य तन्मधुकृद्व्रातघातोत्थ। पुन

१ मास जीवशरीर जीवशरीर भवन वा मासम्।
यद्वन्निम्बो वृक्षो वृक्षस्तु भवेन्न वा निम्ब ॥
शुद्ध दुग्ध न गोर्मांस वस्तुवैचित्र्यमीदृश ।
विषघ्न रत्नमादेय विष च विपदे यत ॥
हेय पल पय पेय समे सत्यपि कारणे ।
विषद्रोरायुषे पत्र मूल तु मृतये मतम् ॥
२ ग्रामसप्तकविदाहिरेफसा तुल्यता न मधुभक्षिरेफस ।
तुल्यमत्र लवलेन कुत्रचित्-निम्नगापतिजल न जायते ॥
मक्षिकादिघातसारघ कुधी मैढिक गणविनाशनस्पृह ।
पापकर्दमनिषेधनिम्नगा यस्य हन्त करुणा कुतस्तना ॥
स्वयमेव विगलितं यद् गृहीतमथवा बलेन निजगोलात् ।
तत्रापि भवति हिंसा तदाश्रयप्राणिना घातात् ॥
३ अनेकजन्तुसङ्घात निघातनसमुद्भवम्।
जगुप्सनीय लालावत्क स्वादयति माक्षिकम् ॥
माक्षिकागर्भसम्भूत बालाण्डकनिपीडनात्।
जात मधु कथ सन्त सेवन्ते कललाकृति ॥
एकैककुसुमक्रोडाद्रसमापीय मक्षिका ।
यद्वमन्ति मधूच्छिष्ट तदश्नन्ति न धार्मिका ॥

फल्गुरत्र काकोदुम्बरिका । किंविशिष्टानि, आर्द्राणि, न केवलमार्द्राणि तान्यदन् स्थूलसूक्ष्मप्राणिनो हन्ति, किं तर्हि शुष्काण्यपि कालोच्छिन्नत्रसान्यपि । तान्यदन् स्वमात्मानं हन्ति । कस्मात् रागयोगेन प्रीतिसम्बन्धात् । अन्त दीपकवादिदं सन्धानादिष्वपि योज्यम् । तत्रापि [1]रागावतारद्वारेणात्मघातस्यो क्तत्वात् ॥ १३ ॥

अथ निशाभोजनागालितजलोपयोगयोर्मद्याद्युपयोगवद्दोषमयत्वात्परि हारमाह—

रागजीववधापाय-भूयस्त्वात्तद्वदुत्सृजेत् ।
रात्रिभक्तं तथा युञ्ज्यान्न पानीयमगालितम् ॥ १४ ॥

टीका—उत्सृजेद्वर्जयेद्धार्मिकः । किं तत्, रात्रिभक्तं रात्रावन्नप्राशनं । किंवत् तद्वत् मद्यपानादिवत् । कस्मात् रागेत्यादि, रागश्च जीववधश्च अपायाश्च जलोदरादयस्ते भूयांसो दिनभोजनादतिशयेन बहवो यत्र तद्रागजीववधापायभूयस्तस्य भावस्तत्त्वं तस्मात् । तथा न युञ्ज्यात् नोपयुञ्जीत । किं तत्, पानीयं जलं पेयवार्तिघृतादि वा मर्दं द्रवद्रव्याकिंविशिष्टं, अगालितं वस्त्रादपरिसृतम् ।

साम्प्रतमनस्तमितभोजिनः सफलं किंचिद्दृष्टान्तेन मुग्धजनप्ररोचनार्थं प्रकटयति—

चित्रकूटेऽत्र मातङ्गी यामानस्तमितव्रतात् ।
स्वभर्त्रा मारिता जाता नागश्रीः सागराङ्गजा ॥ १५ ॥

टीका—जाता उत्पन्ना । काऽसौ मातङ्गी अन्त्येवासिनी । किंविशिष्टा, सागराङ्गजा सागरदत्तश्रेष्ठिपुत्री । किंनाम्नी, नागश्री । क, चित्रकूटे । किंविशिष्टे ऽत्र एतस्मिन्नेव मालवदेशस्योत्तरस्यां दिशि प्रसिद्धे । कस्मात् यामानस्तमितव्रतात् याम प्रहरमात्र पालितादनस्तमितभोजननियमात् । किंविशिष्टा सती, मारिता । केन स्वभर्त्रा जागरिकनाम्ना ॥ १५ ॥

एवं कृतपरिकर्मणा पाक्षिकश्रावकेण स्थूलहिंसादिविरतिरपि यथाशक्ति भावनीयेत्युपदेशार्थमाह—

---

१ अर्कालोकेन विना भुञ्जानः परिहरेत्कथं हिंसाम् ।
अपि बोधितप्रदीपो भोज्यजुषां सूक्ष्मजीवानाम् ॥

स्थूलहिंसानृतस्तेयमैथुनग्रन्थवर्जनम् ।
पापभीरुतयाऽभ्यस्येद्बलवीर्यनिगूहकः ॥ १६ ॥

टीका—अभ्यसेद्भावयेत् । कोऽसौ, श्रावकः । किं सन्, स्थूलेत्यादि, वक्ष्यमाणलक्षणं स्थूलहिंसादिविरतिरूपमणुव्रतपञ्चकं । कया, पापभीरुतया, न तु राजादिभयेन, समस्तदुःखामे धर्मक्षपणाऽनिष्टे । किंविशिष्टः सन्, बलवीर्यनिगूहकः बलमाहारादिना शक्तिः सैव नैसर्गिकं वीर्यं तयोर्निगूहकस्तदनुसारीत्यर्थः ॥ १६ ॥

एवं हि स्थूलहिंसादिविरतिमभ्यस्यता वेश्यादाविव द्यूतेऽप्यासक्तिर्न कर्तव्येत्युपदिशति—

द्यूते हिंसानृतस्तेयलोभमायामये सजन् ।
क्व स्वं क्षिपति नानर्थे वेश्याखेटान्यदारवत् ॥ १७ ॥

टीका—अनर्थे न क्षिपति, सर्वेष्वपि धर्मादिभ्रंशव्यापारयतीत्यर्थः । कं, स्वं आत्मानं जातिं च । किं कुर्वन्, सजन् गृद्धिं कुर्वन्, कौतुकमात्रेण द्यूतक्रीडनस्य पाक्षिकेण स्वनुमतत्वात्प्रयत्नमुच्यते । क्व सजन्, द्यूते । किंविशिष्टे, हिंसा प्राणातिपातः, अनृतमसत्यवचनं, स्तेयं चौर्यं, लोभो गार्ध्यं, माया वञ्चना, ता प्रकृता प्राचुर्येण कृता अस्मिन्निति हिंसादिमये । किंवत्, वेश्यायामाखेटे परदारेषु च यथा । वेश्यादिष्वपि हिंसादिमयत्वादात्मनः स्वस्य जातेश्च पुरुषार्थभ्रंशस्य सुप्रसिद्धत्वात् ॥ १७ ॥

अथ प्रसिद्धाचार्यानुरोधाद्धर्माचार्याणां सूत्राविरोधेन देशनामनागुपलक्ष्यमाणाय तेषामष्टमूलगुणानुद्देष्टुमाह—

---

१ सर्वानर्थप्रथमं मथनं शौचस्य सद्म मायायाः ।
दूरात्परिहर्तव्यं चौर्यासत्यास्पदं द्यूतम् ॥

२ कौपीनं वसनं कदन्नमशनं शय्या धरा पांशुला
जल्पोऽश्लीलगिरः कुटुम्बकजनद्रोहः सहाया विटाः ।
व्यापाराः परवञ्चनानि सुहृदश्चौरा महान्तो द्विषः
प्रायः सैष दुरोदरव्यसनिनः संसारवासक्रमः ॥

मद्यपलमधुनिशाशन-
पञ्चफलीविरतिपञ्चकाप्तनुती ।
जीवदया जलगालन-
मिति च कचिदष्टमूलगुणाः ॥ १८ ॥

टीका—वर्तन्ते । के मूलगुणाः । कति, अष्टौ । क, कचित् शास्त्रे । कथ, मद्येत्यादि, पञ्चफली पञ्चानां फलानां समाहारः पिप्पलादिफलपञ्चकमित्यर्थः, तद्व्यतिरेक एवाष्ट मूलगुणः, आप्तनुतिः त्रिकालदेववन्दना, मद्य च पलं च मधु च निशाशनं च पञ्चफली च ताभ्यः पञ्चभ्यो विरतस्तासां पञ्चकं, सप्ताप्तनुतिश्च ते द्वे, जीवदया अनुकम्पा, जलगालनं चेति ॥ १८ ॥

मद्यस्तमुपलक्षणम् सार्वकालिकमन्यत्र बहुद्धिपूर्वकमद्यादिविरतिकृता कृतोपनीतिनां ब्राह्मणक्षत्रियविशां जिनधर्मश्रुत्यधिकारितामाविष्कर्तुमाह—

यावज्जीवमिति त्यक्त्वा
महापापानि शुद्धधीः ।
जिनधर्मश्रुतेर्योग्य
स्यात्कृतोपनयो द्विजः ॥ १९ ॥

टीका—स्यादृथेम् । कोऽसौ, द्विजः द्विर्जातो मातृगर्भे जिनसमयज्ञानगर्भे चोत्पादात् द्विजो ब्राह्मणक्षत्रियविशामन्यतमः 'त्रयो वर्णा द्विजातय' इति वचनात् । किंविशिष्ट, कृतोपनय कृतो यथाविध्युपकल्पित उपनयो मौञ्जीबन्धादिलक्षणोपनीतिक्रिया यस्य स तथोक्त । किंविशिष्ट स्यात्, योग्योऽधिकारी । कस्याः, जिनधर्मश्रुतेः वीतरागसर्वज्ञोपदिष्टस्य धर्मस्य श्रुतिः श्रवणं शास्त्रं वा उपासकाध्ययनादि तस्याः । किं कृत्वा, शुद्धधीः सम्यक्त्वविशुद्धबुद्धिः सन् । त्यक्त्वा । कानि, महापापानि महद्भिः पुलमनन्तसंसारकारणं पापं येभ्यस्तानि मद्यपानादीनि प्राक्प्रबन्धेनोक्तानि । कथं यावज्जीवं जीविताावधि । कथ, इति अनेन प्रकारेण ॥ १९ ॥

1 अष्टावनिष्टदुस्तरदुरितायतनान्यमूनि परिवर्ज्य ।
जिनधर्मदेशनाया भवन्ति पात्राणि शुद्धधियः ॥

सहजामहार्यां धार्मिकीं गुणसम्पदमुद्वहतो भव्यान् यथासम्भवमगमयन्नाह—

जाता जैनकुले पुरा जिनवृषाभ्यासानुभावाद्गुणै-
र्येऽयत्नोपनतैः स्फुरन्ति सुकृतामग्रेसराः केऽपि ते ।
येऽप्युत्पद्य कुदृक्कुले विधिवशाद्दीक्षोचिते स्वं गुणै-
र्विद्याशिल्पविमुक्तवृत्तिनि पुनन्त्यन्वीरते तेऽपि तान् ॥

टीका—सन्ति । के ते, केऽपि कतिपये सम्प्रति बहूनामभावात् । किंविशिष्टाः, अग्रेसराः सम्यक्त्वसहचारिपुण्योदयोन्मुख्याः । केषां, सुकृतां कृतपुण्यानां । ये किं, ये स्फुरन्ति लोकचित्ते चमत्कारं कुर्वन्ति । कैः, गुणैः सम्यक्त्वादिभिः । किंविशिष्टैः,—अयत्नोपनतैः प्रयत्नमन्तरेण प्राप्तैः सहजैरित्यर्थः । किंविशिष्टाः सन्तो, जाता उत्पन्नाः । क्व, जैनकुले जिनो देवता येषां ते जैनास्तेषां कुलं पूर्वपुरुषपरम्परासम्भवो वंशस्तत्र, जिनोक्तगर्भाधानादिनिर्वाणपर्यन्तक्रियामन्त्रसंस्कारयोग्ये महान्वय इत्यर्थः । कस्मात्, पुरा पूर्वजन्मनि जिनवृषस्य सर्वज्ञोक्तधर्मस्याभ्यासः अनवरतप्रवृत्तिस्तस्यानुभावो माहात्म्यं तज्जनितपुण्योदयस्तस्मात् । तथा अन्वीरतेऽनुगच्छन्ति । के, तेऽपि । कान्, तान् पूर्वोक्तान् जैनकुलजातान्, तत्सदृशा भवन्तीत्यर्थः । ये किं, ये पुनन्ति पवित्रीकुर्वन्ति । कं, स्वमात्मानं । कैः, गुणैः वक्ष्यमाणतत्त्वार्थप्रतिपत्त्यादिभिः । किं कृत्वा, उत्पद्य जनित्वा । क्व, कुदृक्कुलेऽपि मिथ्यादृष्टिवंशेऽपि । अपिरत्र विस्मये निश्चये । किंविशिष्टे, दीक्षोचिते दीक्षा व्रताविष्करणं व्रतोन्मुखस्य वृत्तिरिति यावत्, सा श्रावकोपासकदीक्षा जिनमुद्रा वा उपनीत्यादिसंस्कारो वा । पुनः किंविशिष्टे, विद्याशिल्पविमुक्तवृत्तिनि विद्याऽऽजीवनार्थं गीतादिशास्त्रं, शिल्पं कारुकर्म, ताभ्यां विमुक्ता ततोऽन्या वृत्तिर्येषां कृष्यादिलक्षणो जीवनोपायो यत्र तस्मिन् । कस्मात्, विधिवशात् मिथ्यात्वसहचारिपुण्योदययोगात् ॥ २० ॥

इदानीं द्विजातिषु कुलक्रमायातमिथ्याधर्मपरिहारेण विधिवज्जिनोक्तमार्गमाश्रित्य स्वाध्यायध्यानबलादशुभकर्माणि निघ्नन्तं भव्यमभिष्टौति—

तत्त्वार्थं प्रतिपद्य तीर्थकथनादादाय देशव्रतं
तद्दीक्षाग्रधृतापराजितमहामन्त्रोऽस्तदुर्दैवतः ।
आङ्गं पूर्वमथार्थसंग्रहमधीत्याधीतशास्त्रान्तरः
पर्वान्ते प्रतिमासमाधिमुपयन्धन्यो निहन्त्यंहसी ॥

टीका—निहन्ति नाशयति । कोऽसौ, धन्यः सुकृती । के, अंहसी द्रव्यभावपापे इत्यर्थः । किं कुर्वन्, उपयन् अभ्यस्यन् । कं, प्रतिमासमाधिं रात्रिप्रतिमायोगं । क्व, पर्वान्ते पर्वणां मासि मासि द्वयोरष्टम्योर्द्वयोश्चतुर्दश्योरन्ते अथमाने रात्रावित्यर्थः । किंविशिष्टः सन्, अधीतशास्त्रान्तरः अधीतानि विपठितानि शास्त्रान्तराणि सौगतादिग्रन्था व्याकरणादीनि च येनासौ । किं कृत्वा, अधीत्य पठित्वा । कम्, अर्थसङ्ग्रहं उदारग्रन्थमुपश्रुत्य, सूत्रमपि । किंविशिष्टं, आङ्गं आचाराङ्गादिद्वादशाङ्गाश्रितं, न केवलमाङ्गं, पौर्वं च चतुर्दशपूर्वगतश्रुताश्रितम् । अथ शब्दोऽत्र चार्थे । किम्भूतो भूत्वा, अस्तदुर्दैवतः त्यक्तमिथ्यादेवतागणः । पुनः किंविशिष्टो भूत्वा, तदित्यादि, तस्य देशव्रतस्य दीक्षा अग्रं पूर्वं यस्य तत्तद्दीक्षाग्रं उपासकदीक्षापूर्वकं धृतो गुरुमुखादवधारितोऽपराजितो नाम महान् गणधरदेवादीनां पूज्यो मन्त्रः पञ्चनमस्काराख्यो येन स तद्दीक्षाग्रधृतापराजितमहामन्त्रः । किं कृत्वा, आदाय लब्ध्वा । किं तत्, देशव्रतं तद्दीक्षामूलगुणाष्टकादिकं । किं कृत्वा, प्रतिपद्य निश्चित्य । कं, तत्त्वार्थं जीवादिकं । कस्मात्, तीर्थकथनात् तीर्थस्य धर्माचार्यस्य गृहस्थाचार्यस्य वा कथनादाख्यप्रबन्धात् । एता अष्टौ मिथ्यादृशो दीक्षान्वयक्रियाः क्रमेण संक्षेपादुक्ता विस्तरतस्तु ज्ञानप्रदीपिकायामार्षे वा द्रष्टव्याः । अत्रार्षोक्तः श्लोको यथा—

अवतारो वृत्तलाभः स्थानलाभो गणग्रहः ।
पूजाराध्यं पुण्ययज्ञो दृढचर्योपयोगिता ॥

---

१ गुरुर्जनयिता तत्त्व-ज्ञानं गर्भः सुसंस्कृतः ।
तथा तत्रावतीर्णोऽसौ भव्यात्मा धर्मजन्मना ॥
२ ततोऽस्य वृत्तलाभः स्यात्तदैव गुरुपादयोः ।
प्रणतस्य व्रतव्रातं विधानेनोपसेदुषः ॥

३ ततः कृतोपवासस्य पूजाविधिपुरस्सरम् ।
स्थानलाभो भवेदस्य तत्रायमुचितो विधिः ॥
जिनालये शुचौ रंगे पद्ममष्टदलं लिखेत् ।
विलिखेद्वा जिनास्थान-मण्डलं समवृत्तकम् ॥
श्लक्ष्णेन पिष्टचूर्णेन सलिलालोडितेन वा ।
वर्तनं मण्डलस्येष्टं चन्दनादिद्रवेण वा ॥
तस्मिन्नष्टदले पद्मे जैने वाऽऽस्थानमण्डले ।
विधिना लिखिते तज्ज्ञैर्विष्वग्विरचितार्चने ॥
जिनार्च्याभिमुखं सूरि-र्विधिनैनं निवेशयेत् ।
तवोपासकदीक्षेय-मिति मूर्ध्नि मुहुः स्पृशन् ॥
पञ्चमुष्टिविधानेन स्पृष्ट्वैनमधिमस्तकम् ।
पूतोऽसि दीक्षयेत्युक्त्वा सिद्धशेषं च लम्भयेत् ॥
ततः पञ्चनमस्कार-पदान्यस्मायुपादिशेत् ।
मन्त्रोऽयमखिलात्पापा-त्त्वां पुनीतादितीरयन् ॥
कृत्वा विधिमिमं पश्चात्पारणाय विसर्जयेत् ।
गुरोरनुग्रहात्सोऽपि सम्प्रीतः स्वं गृहं व्रजेत् ॥
४ इयन्तं कालमज्ञानात्पूजिताः स्थ कृतादरम् ।
पूज्यास्त्विदानीमस्माभि-रस्मत्समयदेवताः ॥
ततोऽपमृषितेनाल-मन्यत्र स्वैरमास्यताम् ।
इति प्रकाशमेवैता नीत्वान्यत्र क्वचित्त्यजेत् ॥
गणग्रहः स एषः स्यात्प्राक्तनं देवतागणम् ।
विसृज्यार्चयतः शान्ता देवताः समयोचिताः ॥
५ पूजाराध्याख्यया ख्याता क्रियाऽस्य स्यादतः परा ।
पूजोपवाससम्पत्त्या शृण्वतोऽङ्गार्थसंग्रहम् ॥
६ ततोऽन्या पुण्ययज्ञाख्या क्रिया पुण्यानुबन्धिनी ।
शृण्वतः पूर्वविद्याना-मर्थं सब्रह्मचारिणः ॥
७ तदास्य दृढचर्याख्या क्रिया स्वसमयश्रुतम् ।
निष्ठाप्य शृण्वतो ग्रन्थान्बाह्यानन्यांश्च कांश्चन ॥
८ दृढव्रतस्य तस्यान्या क्रिया स्यादुपयोगिता ।
पर्वोपवासपर्यन्ते प्रतिमायोगधारणम् ॥

अथ शूद्रस्याप्याहारादिशुद्धिमतो ब्राह्मणादिवद्धर्मक्रियाकारित्वं यथोचितमनुमन्यमान प्राह–

शूद्रोऽप्युपस्कराचार–
वपुःशुद्ध्याऽस्तु तादृशः ।
जात्या हीनोऽपि कालादि-
लब्धौ ह्यात्माऽस्ति धर्मभाक् ॥२२॥

टीका—अस्तु भवतु । कोऽसौ, शूद्रोऽपि । किंविशिष्ट,–तादृशो जिनधर्मश्रुतेर्योग्य । किंविशिष्ट सन्, उपस्कर आसनाद्युपकरण, आचार मद्यादिविरति, वपु शरीर, तेषा त्रयाणा शुद्ध्या पवित्रतया विशिष्ट । कुत इत्याह–जात्येत्यादि, हि यस्मादस्ति भवति । कोऽसौ, आत्मा जीव । किंविशिष्टा, धर्मभाक् श्रावकधर्माराधक । कस्या सत्या कालादिलब्धौ कालादीना कालदेशादीनां लब्धौ धर्माराधनयोग्यतायां सत्या । किंविशिष्टोऽपि, हीनो रिक्तोऽल्पो वा कि पुनरुत्कृष्टो मध्यमो वेत्यपिशब्दार्थं । कया, जात्या वर्णसम्भूत्या । वर्णलक्षणमार्षे यथा–

जातिगोत्रादिकर्माणि शुक्लध्यानस्य हेतवः ।
येषु त स्युस्त्रयोवर्णा शेषा शूद्रा प्रकीर्तिता ॥

इत्थमानृशस्यममृषाभाषित्व परस्वनिवृत्तिरिच्छानियमो निषिद्धासु च स्त्रीषु ब्रह्मचर्यमिति सर्वसाधारणधर्ममभिधायेदानीमध्ययन यजन दान ब्राह्मणक्षत्रियविशा समानो धर्मोऽध्यापनयाजनप्रतिग्रहाश्च ब्राह्मणानामेवेति विशेषतस्तद्व्याख्यानार्थमुत्तरप्रबन्धमुपक्रममाणो यजन द्विविधमाय पाक्षिक तावदेव नियुक्ते—

यजेत देव सेवेत गुरून्पात्राणि तर्पयेत्
कर्म धर्म्यं यशस्य च यथालोकं सदा चरेत् ॥ २३ ॥

टीका—यजेत् पूजयेत् । कोऽसौ, श्रावक । क, देव दीव्यते स्तूयते इन्द्रादिभिरिति देव परमात्मा त । तथा सेवत उपासीत । कोऽसौ, श्रावक कान् गुरुन् धर्माचार्यादीन् । तथा तर्पयेत् प्रीणयेत् । कोऽसौ, श्रावक । कानि, पात्राण सपूज्यमानमोक्षकारणगुणान् । तथा आचरेत् अनुतिष्ठेत् ।

कोऽसौ, श्रावक । किं तत्, कर्म मूल्वाऽऽश्रितानित्यादिना वक्ष्यमाणं । किंविशिष्टं, धर्म्यं दयाप्रधानत्वाद्धर्मादनपेतं, न केवलं धर्म्यं यशस्यं च धर्म्यं तावदवश्यमाचरणीयं तच्चेत्कीर्त्यर्थं स्यात्तदा सुतरां भद्रकमित्ययमर्थश्चश-ब्देनाचीयते । अनुक्तसमुच्चये चाऽत्र च तेनायुष्यं च कर्म ब्राह्ममुहूर्तोत्थानश-रीरचिन्तादन्तधावनादिकमायुर्वेदप्रसिद्धमाचरेदिति लभ्यते । कथ, यथालोकं लोकस्यानतिक्रमेण लोकानुसारेणेत्यर्थः । यो य आलोक आप्तोपदेशप्रकाश-स्तेन तेन तत्कर्माचरेदिति भावः । कथं, सदा नित्यम् ॥ २१ ॥

इतोऽष्टादशभिः पद्यैर्जिनपूजां प्रपञ्चयति—

यथाशक्ति यजेतार्हद्देवं नित्यमहादिभिः ।
सङ्कल्पतोऽपि तं यष्टा भेकवत्स्वर्महीयते ॥ २४ ॥

टीका—यजेत् । कोऽसौ, श्रावकः । कं, अर्हद्देवं । कथं, यथाशक्ति या या शक्तिस्तया । कैः,—नित्यमहादिभिः वक्ष्यमाणैः । यतो महीयते पूज्यो भवति । कोऽसौ, जीवः । किंविशिष्टो, यष्टा ताच्छील्येन साधुत्वेन वा यजमानः । कं, तं अर्हद्देवं । कस्मात्सङ्कल्पतोऽपि मनोऽहमर्हद्देवमर्चयामि इत्यध्यवसायात्, किं पुनः कायेन गन्धाक्षतादिभिर्वाचा च विविधस्तवर्मरयवरभिरपि विशदार्थं । क्व महीयतेऽसौ, स्वः स्वर्गे महर्द्धिकदेवैः स्वामीति मत्वा पूज्यत इत्यर्थः । किंवत्, भेकवत् राजगृहनगरे श्रेष्ठिचरो दर्दुरो यथा ॥ २४ ॥

अथ नित्यमहमाह—

प्रोक्तो नित्यमहोऽन्वहं निजगृहान्नीतेन गन्धादिना
पूजा चैत्यगृहेऽर्हतः स्वविभवैश्चैत्यादिनिर्मापणम् ।

---

१ दानं पूजा जिनैः शीलमुपवासश्चतुर्विधः ।
श्रावकाणां मतो धर्मः संसारारण्यपावकः ॥
आराध्यन्ते जिनेन्द्रा गुरुषु च विनतिर्धार्मिकैः प्रीतिरुच्चैः
पात्रेभ्यो दानमापन्निहतजनकृते तच्च कारुण्यबुद्ध्या ।
तत्त्वाभ्यासः स्वकीयव्रतरतिरमलं दर्शनं यत्र पूज्यं
तद्गार्हस्थ्यं बुधानामितरदिह पुनर्दुःखदो मोहपाशः ॥

भक्त्या ग्रामगृहादिशासनविधादान त्रिसन्ध्याश्रया
सेवा स्वेऽपि गृहेऽर्चन च यमिनां नित्यप्रदानानुगम् ॥

टीका—प्रोक्त प्रवचने कथित । कोऽसौ, नित्यमह । किं, पूजा । कस्य, अर्हंत । क्व, चैत्यगृहे । केन, गन्धादिना चन्दनाक्षतपुष्पादिना । किंविशिष्टेन, नीतेन चैत्यालय प्रापितेन । कस्मा,–स्वगृहात् । कथ,–मन्वह दिने दिने । तथा प्रोक्तो नित्यमह । कि तत्, चैत्यादिनिर्मापण चैत्यचैत्यालयादिनिष्पादन । कस्मात्, स्वविभवात् निजधनविनियोगात् । तथा प्रोक्तो नित्यमह । किं तत्, ग्रामगृहादिशासनविधादान ग्राम सवसथ , गृह वेश्म आदिशब्दात्क्षेत्रहट्टादिपरिग्रह , ग्रामगृहादे शासनविधया शासनविधानेन दान । कया, भक्त्या । तथा प्रोक्ता नित्यमह । कि, सेवा आराधना । कस्य, अर्हंत । किंविशिष्टा, त्रिसन्ध्याश्रया त्रैकालिकी । क्व, गृहे । किंविशिष्टे, स्वे निजे, अपिशब्दाच्चैत्यगृहे च । न केवलमर्हत्पूजादिक नित्यमह प्रोक्त , अर्चन च पूजा । केषा, यमिना सयतानां । किंविशिष्ट, नित्यप्रदानानुग अहरह प्रकृष्टदानमन्वयि ॥ २५ ॥

अथाष्टाह्निकेन्द्रध्वजौ लक्षयति—

जिनार्चा क्रियते भव्यैर्या नन्दीश्वरपर्वणि ।
अष्टाह्निकोऽसौ सेन्द्राद्यैः साध्या त्विन्द्रध्वजो मह ॥२६॥

टीका—प्रोक्त सूरिभि । कोऽसा,–असौ मह । किमाख्य , आष्टाह्निक । या किं, या क्रियते । का,–सौ जिनार्चा अर्हत्पूजा । कै –भव्यैर्भावुकलोकै सम्भूयकरणज्ञापनार्थं बहुवचन । क्व, नन्दीश्वरपर्वणि प्रतिवर्षमाषाढकार्तिकफाल्गुनसितपक्षेष्वष्टम्यादिदिनाष्टके । तथा प्रोक्त । कोऽसौ, इन्द्रध्वजाख्यो मह । काऽसौ, सा जिनार्चा । किंविशिष्टा, साध्या क्रियमाणा । कै –रिन्द्राद्यै इन्द्रप्रतीन्द्रसामानिकादिभि । तुर्विशेषे ॥ २६ ॥

अथ महामह निर्दिशति—

भक्त्या मकुटबद्धैर्या जिनपूजा विधीयते ।
तदाख्या सर्वतोभद्र-चतुर्मुखमहामहा ॥ २७ ॥

टीका—भवन्ति । का,—स्तदाख्या तस्या जिनपूजाया आख्या नामानि । किं किं, सर्वतोभद्र इति, चतुर्मुख इति, महामह इति च तिस्रोऽन्वर्थाः तत्र सर्वत्र प्राणिवृन्दे कल्याणकरणात्सर्वतोभद्र, चतुर्मुखमण्डपे विधीयमाना वा चतुर्मुख, अष्टान्हिकापेक्षया गुरुत्वान्महामह । या किं, जिनपूजा विधीयते । कै,—मं कुटबद्धैर्मकुटानि बद्धानि सामान्तादिभिर्येषा ते मकुटबद्धा मण्डलेश्वरास्तै । कया, भक्त्या, न तु चक्रवर्त्यादिभयादिना । एषोऽपि कल्पवृक्षवत् केवलमत्र प्रतिनियतजनपदविषय दानादिकम् ॥ २७ ॥

अथ कल्पवृक्षमहमाह—

किमिच्छकेन दानेन जगदाशा प्रपूर्य यः ।
चक्रिभिः क्रियते सोऽर्हं-यज्ञः कल्पद्रुमो मतः ॥ २८ ॥

टीका—मत पूर्वाचार्यैः सम्मत । कोऽसौ सोऽर्हद्यज्ञ । किमाख्य, कल्पद्रुम कल्पवृक्षनामा । य किं, य क्रियते । कैः,—चक्रिभि सम्राड्भि । किं कृत्वा,प्रपूर्य मनर्पण पूरयित्वा । का.,जगदाशा लोकाना मनोरथान् । केन, दानेन त्यागेन । किंविशिष्टेन, किमिच्छकेन किमिच्छसीति प्रश्नपूर्वक याचकेच्छानुरूप क्रियमाणेन ॥ २८ ॥

सम्प्रति बलिस्नपनादिजिनपूजाविशेषाणां नित्यमहादिष्वेवान्तर्भावमाह—

बलिस्नपननाट्यादि नित्य नैमित्तिक च यत् ।
भक्ताः कुर्वन्ति तेष्वेव तद्यथास्व विकल्पयेत् ॥ २९ ॥

टीका—विकल्पयेत् नित्यमहादीनामेव भेदमाचक्षीत विद्वान् । किं, तत् सत् । केषु, तेष्वेव नित्यमहादिषु । कथ, यथास्व यथायोग्य । यत्किं, यत्कुर्वन्ति निर्वर्तयन्ति । के ते, भक्ता भक्तिमन्त । किं तत्, बलिस्नपननाट्यादि, बलिरुपहार, स्नपनमभिषेक ,नाट्य गीतनृत्यवाद्य आदिशब्दात्प्रतिष्ठारथयात्रादि । किंविशिष्ट, नित्य प्रत्यहविधेय । तथा नैमित्तिक पर्वकर्तव्यम् ॥ २९ ॥

इदानीं जलादिपूजाना प्रत्येक फलमाल्पति—

वार्धारा रजस शमाय पदयो सम्यक्प्रयुक्ताऽर्हत
सद्गन्धस्तनुसौरभाय विभवाच्छेदाय सन्त्यक्षता ।

यष्टु स्रग्दिविजस्रजे चरुरुमास्वाम्याय दीपस्त्विषे
धूपो विश्वदृगुत्सवाय फलमिष्टार्थाय चार्घाय सः॥३०॥

टीका—भवति । कोऽसौ, वार्धारा वारो जलस्य धारासुतिः । कस्मै, रजसा अनुद्रेकाय । कस्य, रजस. पापस्य ज्ञानदर्शनावरणकर्मणोर्वा । कस्य, यष्टुरा मन पूजयितु । किविशिष्टा सती, प्रयुक्ता सम्पादिता । कयो, पदयोश्चरणयो । कस्य, अर्हतो जिनेन्द्रस्य । कथ, सम्यक् यथोक्त विधानेन । तथा भवति । कोऽसौ, सद्गन्ध श्रीचन्दनद्रव । कस्मै, सतुसौरभाय शरीरसौगन्ध्यनिमित्तम् । कस्य, यष्टु । किविशिष्ट सन्, अर्हत पदयो सम्यक् प्रयुक्त । तथा सन्ति भवन्ति । के, अक्षता अखण्डतण्डुला । कस्मै, विभवाच्छेदाय विभवस्याणिमादिविभूतेर्द्रविणस्य वाऽच्छेदो निरन्त रप्रवृत्तिस्तदर्थं । शेष पूर्ववत् । तथा भवति । का,—सौ स्रक् पुष्पमाला । कस्मै, दिविजस्रजे स्वर्गजन्ममन्दारमालार्थं । तथा भवति । कोऽसौ, चरु नैवेद्य । कस्मै, उमास्वाम्याय लक्ष्मीपतित्वार्थं । तथा भवति । कोऽसौ, दीप आरात्रिक । कस्मै, त्विषे दीप्त्यर्थं । तथा भवति । कोऽसौ धूप । किविशिष्ट, अर्हत पदयो सम्यक्प्रयुक्त । कस्मै, विश्वदृगुत्सवाय यष्टु परमसौभाग्यार्थं । तथा भवति । कि तत्, फल बीजपूरादि । कस्मै, इष्टार्थायाभिमतवस्तुप्राप्त्यर्थं । तथा भवति । कोऽसौ, स अर्घ्य तत्वादर्घ्यं पुष्पाञ्जलिरित्यर्थं । कस्मै भव,—र्घ्यार्घाय पूजाविशेषार्थं । अथवा स इत्यनेन पूर्वोक्त इष्टार्थ एव परामृश्यते तेनायमर्थ कथ्यते । यद्यष्टुरात्मनोऽभिमत वस्तु गीतादिक तेन जिने सम्यक्प्रयुक्ते तत्तद्विशिष्टगीतादिवस्तुनोऽर्घाय मूल्याय स्यात्सम्पाद्य तीत्यर्थ ॥ ३० ॥

अथ जिनेज्याया सम्यक्प्रयोगविध्युपदेशपुरस्सर लोकोत्तर फलविशेष माविष्करोति—

चैत्यादौ न्यस्य शुद्धे निरुपरमनिरौपम्यतत्तद्गुणौघ-
श्रद्धानात्सोऽयमर्हन्निति जिनमनघैस्तद्विधोपाधिसिद्धैः ।
नीराद्यैश्चारुकाव्यस्फुरदनणुगुणग्रामरज्यन्मनोभि-
र्भव्योऽर्चन् दृग्विशुद्धिं प्रबलयतु यया कल्पते तत्पदाय॥३१॥

टीका—प्रवलयतु प्रबला प्रकृष्टस्वफलदानसमर्थां करोतु। कोऽसौ, भव्यो भाक्तिक। कां, दृग्विशुद्धिं शङ्काद्दिदोषरहिततत्त्वश्रद्धानं। किं कुर्वं, अर्चन् पूजयन्। कं, जिनं। कैः, नीराद्यैः जलगन्धाक्षतादिभिः। किंविशिष्टैः,-रन्ध्रे दृढतरबाह्यवस्त्वान्यभुक्तशेषत्वादिपापहेतुदोषमुक्तैः। पुनः किंविशिष्टैः, तद्विधोपाधिसिद्धैः निष्पापसाधननिष्पन्नैः। पुनरपि किंविशिष्टैः, चार्विर्यादि-चारूणि दोषनिरासाद्गुणालङ्कारस्वीकाराच्च सहृदयहृदयावर्जकानि, काव्यानि लोकोत्तरवर्णनारमणीयगद्यपद्यवाङ्मयानि, अनणुगुणग्रामा अनणूना महता गुरूणा गुणाना निसर्गनिर्मलयशोरम्यातिशयादीना ग्रामा सङ्घाता, यास्य काव्ये स्फुरन्तो भावुकलोकचित्तेषु चमत्कुर्वन्तोऽनणुगुणग्रामास्तै रज्यन्ति प्रियमाणानि मनासि येषु तानि तैः। किं कृत्वा अर्चन्, न्यस्य सोऽयमर्हन्निति उत्सर्पणावसर्पणतृतीयचतुर्थकालयोर्वृषभादिमहावीरान्तचतुर्विंशतिसंख्यासमेतं समवसृताष्टमहाप्रातिहार्यविराजितसन्मार्गोपदेशेन भव्यलोकं पुनीतवान् सोऽर्हन्नयमिति नामस्थापनाद्रव्यभावैः स्थापयित्वा। क, जिनं। क, यन्त्रादौ यन्त्रे प्रतिमाया, आदिशब्देन तदभावे जिनाकाररहितेऽप्यक्षतादौ। किंविशिष्टे, शुद्धे निर्दोषे दृग्नाकाररहिते इत्यर्थः। कस्मात्, प्रिरित्यादि निरुपमा अविनश्वरा निरोपम्या असाधारणास्तत्तद्गुणा व्यवहारेण दर्शनविशुद्ध्यादिभावना प्रसुतकल्याणपञ्चकलक्षणा निश्चयेन चिदचिदूपद्रव्याकारविशेषस्वरूपास्ते षामोघे समूहे श्रद्धान रुचितरोऽनुरागास्तस्मात्। इत्थं तां दृग्विशुद्धिं प्रबलयतु भव्यो यया दृग्विशुद्ध्या प्रबलीकृतया कल्पते समर्थते भव्यः। कस्मै, तत्पदाय तीर्थकरत्वाय। एकस्या अपि दृग्विशुद्धेस्तत्कर्तृत्वस्य तीर्थकरत्वाख्यपुण्यविशेषबन्धहेतुत्वप्रसिद्धेः ॥ ३१ ॥

अधुना व्रतभूषितस्य जिनयष्टुरिष्टफलविशेषममिधत्ते—

दृक्पूतमपि यष्टार महतोऽभ्युदयश्रियः।
श्रयन्त्यहम्पूर्विकया किं पुनर्व्रतभूषितम् ॥ ३२ ॥

टीका—श्रयन्ति आश्रयन्ति। का, अभ्युदयश्रिय पूजार्थाज्ञैश्वर्यविशिष्टबलपरिजनकामभोगसम्पद। क, यष्टार पूजकं। कस्य, अर्हतः। किंविशिष्टं, दृक्पूतमपि सम्यक्त्वविशुद्धं। अपिविस्मये। कया, अहम्पूर्विकया अहं पूर्वमहं पूर्वमित्यहम्पूर्विका तया अहमहमिकया। किंपुनः,-विशेषतः श्रयन्ति।

का, अभ्युदयप्रिय । क अर्हतो यष्टार । किंविशिष्ट, मतैर्देशतो हिंसादिविरतिलक्षणैर्भूषितमलंकृतम् ॥ ३२ ॥

जिनपूजान्तरायपरिहारोपायविधिमाह—

यथास्वं दानमानाद्यैः सुखीकृत्य विधर्मणः ।
सधर्मण स्वसात्कृत्य सिध्यर्थी यजतां जिनम् ॥ ३३ ॥

टीका—यजतो पूजयतु । कोऽसौ, सिध्यर्थी जिनपूजासम्पूर्णता स्वात्मोपलब्धि वा अभीप्सु । क, जिन । किं कृत्वा, स्वसात्कृत्य स्वाधीनान् कृत्वा । कान्, सधर्मण जिनधर्मभावितान् । किं कृत्वा, सुखीकृत्य अनुकूलान् कृत्वा । कान्, विधर्मण शिवादिधर्मरतान् सर्वधर्मबाह्यान् वा । कि यथास्व यथायोग्य । दानमानाद्यै अर्थविनियोगसत्काराभ्युत्थानासनप्रदानादिभिरावर्जनोपायै ॥ ३३ ॥

स्नानापास्तदोषस्यैव गृहस्थस्य स्वय जिनयजनेऽधिकारित्वमन्यस्य पुनर्भाविधिनैवान्येन तद्याजन इत्युपदेशार्थमाह—

स्न्यारम्भसेवासंक्लिष्ट स्नात्वाऽऽकण्ठमथाशिर. ।
स्वयं यजेतार्हत्पादा नस्नातोऽन्येन याजयेत् ॥ ३४ ॥

टीका—यजेत् पूजयेत् । कोऽसौ, श्राविको गृही । कान्, अर्हत्पादान् जिनचरणान् । केन, स्वयमात्मना । किं कृत्वा स्नात्वा शौच कृत्वा । कथ,-आकण्ठ

---

१ नित्य स्नान गृहस्थस्य देवार्चनपरिग्रहे ।
यतेस्तु दुर्जनस्पर्शात्स्नानमन्यद्विगर्हितम् ॥
वातातपादिसस्पृष्टे भूरितोये जलाशये ।
अवगाह्याचरेत्स्नान-मतोऽन्यद्गालित भजेत् ॥
पादजानुकटिग्रीवा शिर पर्यन्तसश्रयम् ।
स्नान पञ्चविध ज्ञेय यथादोष शरीरिणाम् ॥
ब्रह्मचर्योपपन्नस्य निवृत्तारम्भकर्मण ।
यद्वा तद्वा भवेत्स्नान-मन्त्यमन्यस्य तु द्वयम् ॥
सर्वारम्भविजृम्भस्य ब्रह्मजिह्मस्य देहिन ।
अविधाय बहि शुद्धिं नासोपास्त्याधिकारिता ॥

कण्ठावधि । अथ अथवा । आशिर मस्तकावधि, यथादोष अल्पेन शुचीभूय स्नात्वा । किंविशिष्ट सन्, स्त्र्यादीति, स्त्रीसेवया कृष्यादिकर्मसेवया च सङ्क्लिष्ट-समन्तात्क्लिष्टे मनसि चोपतप्त, प्रस्वेदतन्द्राऽलस्यदौर्मनस्यादिदोषदूषितकाय-मनस्क इत्यर्थः । सोऽस्नात किं कुर्यादित्याह–याजयेत्पूजया सयोजयेत् । कोऽसौ, अस्नातस्तथाविधो गृही । कान्, ऽहत्पादान् । केन, अन्येनऽन्येन स्नातेन सब्रह्मचारिमतीर्थ्यसधर्मकादिना ॥ ३४ ॥

चैत्यादिनिर्माणस्य धर्मविशेषसमर्थनया विधेयतामभिधत्ते—

निर्माप्यं जिनचैत्यतद्गृहमठस्वाध्यायशालादिकं
श्रद्धाशक्त्यनुरूपमस्ति महते धर्मानुबन्धाय यत् ।
हिंसारम्भविवर्तिनां हि गृहिणां तत्तादृगालम्बन-
प्रागल्भीलसदाभिमानिकरसं स्यात्पुण्यचिन्मानसम् ॥

टीका–निर्माप्य कारापणीय । किं तत्, सज्जिनचैत्यादि । कैः, पाक्षिकश्रावकैः । किंविशिष्ट, श्रद्धाशक्त्यनुरूप रुच्या सामर्थ्येन च सदृश । यत्किं, यदस्ति भवति । कस्मै, धर्मानुबन्धाय धर्मस्यानुबन्धोऽलब्धलाभो लब्धप-रिरक्षणं रक्षितवर्धनमित्येवमात्मकस्तस्मै । किंविशिष्टाय, महते विपुलाय । एतेन चैत्यालयादिनिर्मापणे सावद्यदोषशङ्कानिरस्ता । यदाह तत्पापमपि न पाप यत्र महान् धर्मसम्बन्ध इति । हि यस्मात् । स्यात् भवेत् । किं तत्, मानस मन । किंविशिष्ट, पुण्यचित् पुण्य सुकृत चिनोति वर्धयति, अथवा पुण्य पवित्रा निर्मला चित् संवित्तिर्यस्य तत्पुण्यचित् । केषां, गृहिणां गृहस्थानां

आप्लुत सम्प्लुतस्नात शुचिवासोविभूषित ।
मौनसंयमसम्पन्न कुर्याद्देवार्चनाविधिम् ॥
दन्तधावनशुद्धास्यो मुखवासोचिताननः ।
असञ्जातान्यससर्गः सुधीर्देवानुपाचरेत् ।
१ यद्यप्यारम्भतो हिंसा हिंसायाः पापसम्भवः ।
तथाऽप्यत्र कृतारम्भो महत्पुण्यं समश्नुते ॥
निरालम्बनधर्मस्य स्थितिर्यस्मात्ततः सताम् ।
मुक्तिप्रासादसोपान-माप्तैरुक्तो जिनालयः ॥

किंविशिष्टानां, हिंसारम्भविवर्तिनां हिंसाप्राय· आरंभः कृष्यादि· तत्र विवर्तन्ते विविधं परिणमन्तेऽभीक्ष्णमिति तद्विवर्तिनस्तेषां। किंविशिष्टं तत्, तदित्यादि, तज्जिनचैत्यचैत्यालयादि तात्पर्थयात्रादि, आलम्बनं दृग्विशुध्यङ्गं, प्रागल्भी प्रौढि, आभिमानिकरसः अहङ्कारानुरक्तो हर्ष, तच्च तादृक्च तत्तादृक् तच्च तदालम्बनं च तस्य प्रागल्भी तया लसन् द्योतमान स्वसंवित्तिविषयीभवन् आभिमानिकरसो यस्मिन् तत् तथोक्तम् ॥ ३५ ॥

शास्त्रविदामपि प्रायः प्रतिमादर्शनेनैव देवादिसेवापरां मतिं कुर्वाणं कलिकालमपवदते—

धिग्दुष्षमाकालरात्रिं यत्र शास्त्रदृशामपि।
चैत्यालोकादृते न स्यात् प्रायो देवविशा मतिः ॥३६॥

टीका—धिक् निन्दामीत्यर्थ। कां, दुःषमाकालरात्रिं दुःषमा पञ्चमकाल· कालरात्रिर्मरणनिशेव दुर्निवारमोहावहत्वात्। यत्र किं, यस्यां न स्यात्। काऽसौ, मतिरन्तःकरणप्रवृत्तिः। किंविशिष्टा, देवविशा देवं परमात्मानं विशत्यनन्यशरणीभूय श्रयतीति क्विबन्तादृशायतष्टाप्। केषां, शास्त्रदृशामपि श्रुतचक्षुषामपि। कथं, ऋते विना। कस्मात्, चैत्यालोकात् प्रतिमादर्शनात्। कथं, प्रायो बाहुल्येन। केषाञ्चित् शमवैराग्यपराणां चैत्यदर्शनमन्तरेणापि मन परमात्मानं संश्रयतीति भाव ॥ ३६ ॥

कलौ धर्मस्थिति· सम्यक्चैत्यालयमूलेत्यनुशास्ति—

प्रतिष्ठायात्रादिव्यतिकरशुभस्वैरचरण-
स्फुरद्धर्मोद्धर्षप्रसररसपूरास्तरजसः।
कथं स्युः सागाराः श्रमणगणधर्माश्रमपदं
न यत्रार्हद्गेहं दलितकलिलीलाविलसितम् ॥ ३७ ॥

टीका—तत्र नगरादौ कथं स्यु·, कथमपि न भवेयुरित्यर्थ। के ते, सागारा गृहस्था। किंविशिष्टा, प्रतिष्ठेत्यादि, आदिशब्द पूजाभिषेकजागरणाद्यर्थं। व्यतिकरः प्रघट्टक·, स्वैरं स्वच्छन्दं, उद्धर्ष उत्सव, प्रसरश्चिरावस्थायित्वं, रस· हर्षो जलं वा, रज· पापं रेणुश्च, प्रतिष्ठायात्रादीनां व्यतिकरे शुभं प्रशस्तं

पुण्यास्रवणकारणं स्वैरं चरणं मनोवाक्कायव्यापारस्तेन स्फुरंश्चासौ धर्मोद्धर्ष-स्तस्य प्रसरः स एव रसपूरो जलप्रवाहस्तेनास्तं स्फाटितं रजो येषां ते तथा। कथं स्युस्तत्र। यत्र किं, यत्र न भवति। किं तत्, अर्हद्गेहं जिनचैत्यालयः। किंविशिष्टं, दलितं छिन्नं खण्डितं कलिलीलाविलसितं मठपत्यादिदुर्णयो निरंकुशविजृम्भमाणसंक्लेशपरिणामो वा यत्र तद्दलितकलिलीलाविलसितं। पुनः किंविशिष्टं, श्रमणगणधर्माश्रमपदं श्रमणस्य यतिसङ्घस्य धर्मार्थ-माश्रमपदं निवासस्थानम् ॥ ३७ ॥

कलौ वसतिविशेषं विना सतामप्यनवस्थितचित्तत्वं दर्शयति—

मनो मठकुटेराणां वात्ययेवानवस्थया ।
चेक्षिप्यमाणं नाद्यत्वे क्रमते धर्मकर्मसु ॥ ३८ ॥

टीका—न क्रमते नोत्सहते। किं तत्,—मनः। केषां, मठकुटेराणां वसति-दरिद्राणामरण्यादिवासिनां यतीनामित्यर्थः। क्व, धर्मकर्मसु धर्मार्थासु क्रियासु आवश्यकादिषु। कदा, अद्यत्वे अस्मिन् काले। क्रियमाणं, चेक्षिप्यमाणं भृशं पुनः पुनर्वा पात्यमानं। कया, अनवस्थया परापरनगादिविवर्तनपरिभ्रम्या। कयेव, वात्ययेव वातमण्डल्या तूलादिर्यथा ॥ ३८ ॥

विमर्शस्थानं विना महोपाध्यायादीनामपि शास्त्रान्तरतत्त्वज्ञानादौ स्थैर्यं प्रथयति—

विनेयवद्विनेतॄणामपि स्वाध्यायशालया ।
विना विमर्शशून्या धीर्दृष्टेऽप्यन्धायतेऽध्वनि ॥ ३९ ॥

टीका—अन्धायते अन्धमिवात्मानमाचरति तत्त्वं न पश्यतीत्यर्थः। काऽसौ, धीर्बुद्धिः। केषां, विनेतॄणामपि। केषामिव, विनेयवत् उपाध्यायानाम् शिष्याणां यथा। क्व, अध्वनि मार्गे अर्थात्स्वाभ्ये निःश्रेयसि वा। किंविशिष्टेऽपि, दृष्टेऽपि। अभ्यस्तेऽपि। किंविशिष्टा सती, विमर्शशून्या अन्तरतत्त्वबोधविधुरा। कथं, विना। कया, स्वाध्यायशालया पाठस्थानेन। ततोऽर्थ्यादिवत्पुरुषं श्रेयोऽर्थं नियमेन कारयेदिति प्रतिपत्तव्यम् ॥ ३९ ॥

सद्भावुरोपचारस्य नयोरनुकम्पनमेवानुग्रहबुद्ध्या विधापनं बह्वारम्भरतानां गृहस्थानां जिनपूजार्थं पुष्पवाटिकादिनिर्माणे दोषाभावं च प्रकाशयन्नाह—

सत्रमप्यनुकम्प्यानां सृजेदनुजिघृक्षया ।
चिकित्साशालवद्दुष्ये-न्नेज्यायै वाटिकाद्यपि ॥ ४० ॥

टीका—सृजेन्निर्मापयेत्पाक्षिक. । किं तत्, सत्रमन्नप्रदानस्थानं अपिशब्दात्प्रपां च । किंवत्, चिकित्साशालवत् व्याधिप्रतीकारस्थानं यथा । कया, अनुजिघृक्षया उपकर्तुमिच्छया । केषां,-मनुकम्प्यानां कृपाविषयाणां क्षुत्तृष्णार्त्तानां व्याधितानां च । तथा न दुष्येन्न दुष्टं भवेत् । किं तत्, वाटिकादि आदिशब्दाद्वापीपुष्करिण्यादि । किमर्थं,-मिज्यायै पूजार्थं । अपिशब्देनानादरार्थेन विषयसुखार्थं कृष्यादिकं कुर्वतो यद्यपि धर्मबुद्ध्या वाटिकादिविधाने लोके व्यवहारानुरोधाद्दोषो न भवति, तथापि तदकुर्वतामेव क्रयक्रीतेन पुष्पादिना तेषामपि जिन पूजयतो महान् गुणो भवतीति ज्ञाप्यते ॥ ४० ॥

निर्व्याजभक्त्या येन केनापि प्रकारेण जिनं सेवमानानां समस्तदुःखोच्छेदमितस्तत समस्तमीहितार्थसम्पत्तिं चोपदिशति—

यथाकथञ्चिद्भजतां जिनं निर्व्याजचेतसाम् ।
नश्यन्ति सर्वदुःखानि दिशः कामान्दुहन्ति च ॥ ४१ ॥

टीका—नश्यन्ति निवर्तन्ते । कानि, सर्वदुःखानि शरीरमानसतापाः । केषां निर्व्याजचेतसां निर्मायमनसां भाक्तिकानामित्यर्थः । किं कुर्वतां, भजतां सेवमानानां । कं, जिनं । यथाकथञ्चित् येनकेनापि स्नपनपूजास्तवनादिप्रकारेण । तथा दुहन्ति प्रपूरयन्ति । का, दिशः ककुभः । कान्, कामान् मनोरथान् । यथाकामयन्ते जिनयष्टारस्तत्सर्वत्र लभन्ते इत्यर्थः ॥ ४१ ॥

एवं जिनपूजां विधेयतयोपदिश्य तद्वत्सिध्दादिपूजामपि विधेयतयोपदेष्टुमाह—

जिनानिव यजन्सिध्दान्साधून्धर्मं च नन्दति ।
तेऽपि लोकोत्तमास्तद्वच्छरणं मङ्गलं च यत् ॥ ४२ ॥

टीका—नन्दति अन्तरङ्गबहिरङ्गविभूत्या संवर्धते । कोऽसौ, जीव । किं कुर्वन्, यजन् पूजयन् । कान्, सिद्धान् मुक्तात्मनः, । तथा साधून् सिद्धिं साधयन्तीत्यन्वर्थनामानुसरणादाचार्योपाध्याययतीन्, न केवलं तान्, धर्मं च व्यव-

द्वारनिश्चयरूपं रत्नत्रयं । कानिव, जिनानिव अर्हतो यथा । कुत इत्याह्—यत स्मात् । वर्तन्ते । के ते, अपि सिद्धसाधुधर्मा । किंविशिष्टाः, लोकोत्तमा लोकेषूत्कृष्टाः, तथा शरणमार्तिहरणमपायपरिरक्षणोपाया इत्यर्थः ।तथा मङ्गल पापापहा पुण्यप्रदाश्च । किंवत् तद्वत् जिनवत् ॥ ४२ ॥

सकलपूज्यपूजाविधिप्रकाशनेनानुग्राहिकायाः सम्यक्श्रुतदेवतायाः पूजायां मन्त्रयन्नाह—

> यत्प्रसादान्न जातु स्यात् पूज्यपूजाव्यतिक्रमः ।
> तां पूजयेज्जगत्पूज्यां स्यात्कारोड्डमरां गिरम् ॥ ४३ ॥

टीका—पूजयेच्छ्रेयोऽर्थी यजेत । कां, तां गिरं श्रुतदेवतां । किंविशिष्टां, स्यात्कारोड्डमरां स्याच्छब्दप्रयोगेण सर्वथैकान्तवादिभिरजय्यां । पुनः किंविशिष्टां, जगत्पूज्यां विश्वलोकानामर्च्यां । यत्प्रसादात् यस्या अनुग्रहात् न स्यात् न भवेत् । कोऽसौ, पूज्यपूजाव्यतिक्रमः पूज्यानां अर्हत्सिद्धसाधुधर्माणां पूजायां व्यतिक्रमो यथोक्तविधिलङ्घनं । कथं, जातु कदाचिदपि ॥ ४३ ॥

श्रुतपूजकाः परमार्थतो जिनपूजका एवेत्युपदिशति—

> ये यजन्ते श्रुतं भक्त्या ते यजन्तेऽञ्जसा जिनम् ।
> न किञ्चिदन्तरं प्राहुराप्ता हि श्रुतदेवयोः ॥ ४४ ॥

टीका—यजन्ते पूजयन्ति । के ते, पुमांसः । कं, जिनं । केन अञ्जसा पर मार्थेन । ये किं, ये यजन्ते । किं तत्, श्रुतं । कया, भक्त्या । हि यस्मात् । न प्राहुः न ब्रुवन्ति । के ते, आप्ता गुरवः । किं तत्, अन्तरं भेदं । कयोः, श्रुतदेवयोः प्रवचनपरमात्मनोः । कीदृशं, किञ्चित् यदेव श्रुतं स एव देवो य एव च देवस्तदेव श्रुतमित्यर्थः ॥ ४४ ॥

एवं देवपूजाविधिं सङ्क्षेपेणोपदिश्य साक्षादुपकारकत्वेन गुरूणामुपासने नित्यं नियुङ्क्ते—

> उपास्या गुरवो नित्यमप्रमत्तैः शिवार्थिभिः ।
> तत्पक्षताक्ष्यपक्षान्तश्चरा विघ्नोरगोत्तराः ॥ ४५ ॥

टीका—उपास्याः सेव्याः । के ते, गुरवः धर्माराधनायां प्रयोक्तारः । कैः, शिवार्थिभिः परमकल्याणकामैः । किंविशिष्टैः, अप्रमत्तैः प्रमादरहितैः ।

कथ, नित्य शश्वत् । यतो भवन्ति । के ते, त पक्षताक्ष्र्यपक्षान्तश्चरा तेपा गुरूणा पक्षस्तदायत्ततया वृत्ति स एव ताक्ष्र्यपक्षो गरुडपतत्र तत्रान्तर्मध्ये चरन्ति तदन्तश्चरा । किंविशिष्टा भवन्ति, विघ्नोरगोत्तरा विघ्ना प्रक्रमाद्धर्मानुष्ठानविषये अन्तरायास्त एवोरगा सर्पा अपकारकत्वात् तेभ्य उत्तरा परे तद्दूरचारिण , धर्मानुष्ठानप्रत्यूहसर्पैर्नाभिभूयन्त इत्यर्थ ॥ ४५ ॥

गुरूपास्तिविधिमाह—

निर्व्याजया मनोवृत्त्या सानुवृत्त्या गुरोर्मन ।
प्रविश्य राजवच्छश्वद्विनयेनानुरञ्जयेत् ॥ ४६ ॥

टीका—अनुरञ्जयेदात्मनि रक्त कुर्यात् । कोऽसौ, श्रेयोऽर्थी । कि त, स्मन श्चित्त । कस्य, गुरोराराध्यस्य । केन विनयेन अभ्युत्थानादिना कायिकेन, हितमितादिप्रतिपादनेन वाचनिकेन शुभचिन्तनादिना चित्तेन च । कथ, शश्वत् नित्य । [illegible] कृत्वा, प्रविश्यान्तश्चरित्वा । किं तत्, गुरोर्मन । कया मनोवृत्त्या चित्तप्रवृत्त्या । किंविशिष्टया, निर्व्याजया निर्दम्भया । पुन किंविशिष्टया, सानुवृत्त्या छन्दानुवृत्तिसहितया । कस्येव, राजवत्, राज्ञो यथा सेवकवर्ग ॥ ४६ ॥

विनयेनानुरञ्जयेदित्येतदर्थं व्यनक्ति—

पार्श्वे गुरूणा नृपवत्प्रकृत्यभ्यधिका क्रिया ।
अनिष्टाश्च त्यजेत्सर्वा मनो जातु न दूषयेत् ॥ ४७ ॥

टीका—त्यजेत् वर्जयेत् उपासक । का , क्रियाश्चेष्टा । सर्वा । किंविशिष्टा , प्रकृत्यभ्यधिका स्वभावादतिरिक्ता वैकारिकी कोपहास्यविवादादिका । न केवल ता अनिष्टाश्च शास्त्रनिषिद्धाश्च पर्यस्तिकोपाश्रयादिका । क, पार्श्वे समीपे । केषा, गुरूणा । केषामिव नृपवत् राज्ञा यथा । तथा न दूषयेत् न विकारयेत् । किं तत्, राज्ञामिव गुरूणा मन । कथ जातु कदाचिदपि आर्तावस्थायामपीत्यर्थ ॥ ४७ ॥

१ निष्ठीवनमवष्टम्भ जृम्भण गात्रभञ्जनम् ।
असत्यभाषण नर्म हास्य पादप्रसारणम् ॥
अभ्याख्यान करस्फोट करेण करताडनम् ।
विकारमङ्गसस्कार वर्जयेद्यतिसन्निधौ ॥

साम्प्रतं पात्राणि तर्पयेदित्यादिपूर्वोद्दिष्टदानादिविधिप्रपञ्चार्थमाह—

पात्रागमविधिद्रव्य देशकालानतिक्रमात् ।
दानं देयं गृहस्थेन तपश्चर्यं च शक्तितः ॥ ४८ ॥

टीका—देयं दातव्यं । किं तत्, दानं रत्नत्रयानुग्राहकं वस्तु । केन, गृहस्थेन । कस्मात्, पात्राद्यनतिक्रमात् यथापात्रं यथाऽऽगमं यथाविधि यथाद्रव्यं यथादेशं यथाकालं चेत्यर्थः । तथा चर्यमनुष्ठेयं गृहस्थेन । किं तत्, तपोऽनशनादि । कस्मात्, शक्तितः निजसामर्थ्यानुसारेण दानतपसी कुर्यादित्यर्थः ॥४८॥

सम्यग्दृशो नित्यमवश्यतया विधीयमानयोर्दानतपसोरवश्यम्भाविफल-विशेषमाह—

नियमेनान्वहं किञ्चिद्यच्छतो वा तपस्यतः ।
सन्त्यवश्यं महीयांसः परे लोका जिनश्रितः ॥ ४९ ॥

टीका—अवश्यं निश्चितं । सन्ति भवन्ति । के ते, लोकाः । किंविशिष्टाः, परे जन्मान्तराणीत्यर्थः । किंविशिष्टाः सन्ति, महीयांसः इन्द्रादिपदलक्षणाः । कस्य, जिनश्रितः परमात्मानं सेवमानस्य भव्यस्य । किं कुर्वतो, यच्छतो ददतः तपस्यतो वा तपश्चरतः । किं, किञ्चित् यथा तथा शास्त्रविहितं । केन, नियमेन अवश्यतया । कथं,—अन्वहं दिने दिने ॥ ४९ ॥

यदर्थं यद्दानं कर्तव्यं तदर्थमाह—

धर्मपात्राण्यनुग्राह्याण्यमुत्र स्वार्थसिद्धये ।
कार्यपात्राणि चात्रैव कीर्त्यै त्वौचित्यमाचरेत् ॥ ५० ॥

टीका—अनुग्राह्याणि उपकार्याणि श्रेयोऽर्थिना । कानि, धर्मपात्राणि रत्नत्रयसाधनपराः नराः । किमर्थं, स्वार्थसिद्धये । क्व अमुत्र परलोके स्वर्गादिसुखसम्प्राप्त्यर्थमित्यर्थः । तथा अनुग्राह्याणि । कानि, कार्यपात्राणि त्रिवर्गसाधनसहायाः । कस्मै, अत्रैव जन्मनि स्वार्थसिद्धये पुरुषार्थसम्प्राप्तये । तथा आचरेदनुतिष्ठेत् गृही । किं तत्, औचित्यं दानप्रियवचनाभ्यामन्यस्य सन्तोषोत्पादनं । कस्यै कीर्त्यै यशोऽर्थम् ॥ ५० ॥

---

१ वर्गभव्यस्वपन्यानां पात्राणामुपकारकम् ।
दानं यथायथं देयं वैयावृत्यविधायिना ॥

धर्मपात्राणां यथागुण सन्तर्पणीयत्वमाह–

**समयिकसाधकसमयद्योतकनैष्ठिकगणाधिपान्धिनुयात् ।**
**दानादिना यथोत्तरगुणरागात्सद्गृही नित्यम् ॥ ५१ ॥**

टीका—समयिको गृही यतिर्वा जिनसमयश्रित , साधको ज्योतिषमन्त्र वादादिलोकोपकारकशास्त्रज्ञ , समयद्योतको वादित्वादिना मार्गप्रभावक , नैष्ठिको मूलोत्तरगुणश्लाघ्यतपोऽनुष्ठाननिष्ठ , गणाधिप धर्माचार्यस्तादृग्गृहस्थाचार्यो वा एतान् पञ्च धिनुयात् प्रीणयेत् । कोऽसौ, सद्गृही पाक्षिक श्रावकस्त्रैवर्णिको वा गृहस्थ । केन, दानादिना दानमानासनसम्भाषणादिना । कस्मात्, यथोत्तरगुणरागात् यो य उत्तर उत्कृष्ट समयिकादीनां मध्ये तस्य तस्य गुणेषु प्रीतिम , अथवा यो यो यस्योत्कृष्टो गुणस्तत्र तत्र प्रीत्या त धिनुयादिति योऽर्थम् । अत्र श्रमणोपासकेषु मुमुक्षुषु रत्नत्रयानुग्रहबुध्या सन्तर्पण पात्रदत्ति , मुमुक्षुषु च गृहस्थेषु वात्सल्येन यथार्हमनुग्रह समान दत्तिरिति विभाग ॥ ५१ ॥

समदत्तिविधानोपदेशार्थमाह–

**स्फुरत्येकोऽपि जैनत्व गुणो यत्र सतां मत ।**
**तत्राप्यजैनै सत्पात्रै र्द्योत्य खद्योतवद्रवौ ॥ ५२ ॥**

---

१ गृहस्थो वा यतिर्वाऽपि जैन समयमाश्रित ।
यथाकालनुप्राप्त पूजनीय सुदृष्टिभि ॥

२ ज्योतिर्मन्त्रनिमित्तज्ञ सुप्रज्ञ कायकर्मसु ।
मान्य समयिभि सम्यक्परोक्षार्थ+++धी ॥

३ दीक्षायात्राप्रतिष्ठाद्या क्रियास्तद्विरहे कुत ।
तदर्थ परपृच्छाया कथ च समयोन्नति ॥

४ मूलोत्तरगुणश्लाघ्यैस्तपोभिर्निष्ठितास्थिति ।
साधु साधु भजेत्पूज्य पुण्योपार्जनपण्डितै ॥

५ ज्ञानकाण्डे क्रियाकाण्डे चातुर्वर्ण्यपुरस्सर ।
सूरिर्देव इवाराध्य ससाराब्धितरण्डक ॥

टीका—द्योत्य प्रकाश्य प्रभाव्य। के, सत्पात्रे ज्ञानतपोऽधिके । किंविशिष्टे,—रंजैनै शिवादिभक्तिप्रहाचिष्टे । क्व, तत्रापि तपोज्ञानरहितेऽपि जैने। किंवत्, खद्योतवत् खद्योतैरिव । कस्मिन्, रवौ रविसन्निधाने ज्योतिरिङ्गणा यथा निष्प्रभा भवन्ति तथा स्फुरज्जैनत्वगुणेषुस समीपे मिथ्यादृष्टिधार्मिका इत्यर्थः । यत्र किं, यत्र स्फुरति प्रतपति। कोऽसौ, जैनत्वगुण जिन एव देवो मे भवार्णवोत्तारक वास्तीत्यभिनिवेशधर्म। किंविशिष्टोऽपि, ज्ञानतपोरहित ,किं पुनस्तत्सहित इत्यपिशब्दार्थः । किंविशिष्टे, सतामत साधूनामिष्ट ॥ ५२ ॥

श्रेयोऽर्थिना जैनानुमहानुभावमाह—

वरमेकोऽप्युपकृतो जैनो नान्ये सहस्रश ।
दलादिसिद्धान् कोऽन्वेति रससिद्धे प्रसेदुषि ॥ ५३ ॥

टीका—वर भवतु। कोऽसौ, जैन । किंविशिष्ट, उपकृतोऽनुगृहीत । किंविशिष्टोऽपि, एकोऽपि। न वर। के, अन्ये अजैना । किंविशिष्टा, उपकृता। कियन्त, सहस्रश सहस्रसंख्या । अत्र दृष्टान्तमाह—को, न कश्चित्। अन्वेति अनुवर्तते । कान्, दलादिसिद्धान् दल धातुरहितकृत्रिमसुवर्णादिद्रव्य आदि शब्दाद्रूप्योक्थपादि तत्र तेन वा सिद्धान् प्रसिद्धान्। क्व सति, रससिद्धे पारदेन दारिद्र्यव्याधिजरादिनिराकरणशक्त्या प्रतीते पुंसि । किंविशिष्टे, प्रसेदुषि प्रसन्ने अनुग्रहोद्यते ॥ ५३ ॥

नामादिनिक्षेपविभक्तानां चतुर्णां जैनानां पात्रत्व यथोत्तर विशिनष्टि—

नामत स्थापनातोऽपि जैनः पात्रायते तराम् ।
स लभ्यो द्रव्यतो धन्यैर्भावतस्तु महात्मभि ॥ ५४ ॥

टीका—पात्रायते तरा अजैनपात्रेभ्योऽतिशयेन सयुज्यमाननिर्वाणकारण गुणलक्षणपात्रवदाचरति, सम्यक्त्वमहचारिपुण्यास्रवकारणत्वात् । कोऽसौ, जैन । केन, नामत सञ्ज्ञामात्रेण, न पर नाम्ना स्थापनातोऽपि सोऽयं जैन इति कल्पनामात्रेणापि। लभ्य प्राप्य । कोऽसौ, स जैन । केन, द्रव्यतो द्रव्येण आगामिजैनत्वगुणयोग्यत्वेन विशिष्ट। कै, धन्यै पुण्यवद्भि । स एव तु भावतो भावेन जैनत्वगुणयोगेन लभ्य । कै, महात्मभि महाभागै ॥ ५४ ॥

भावजैन प्रति निरुपाधिप्रीतिमतोऽभ्युदयनि श्रेयससम्पद फलमाह—

प्रतीतजैनत्वगुणेऽनुरज्यन्निर्व्याजमासंसृति तद्गुणानाम् ।
धुरि स्फुरन्नभ्युदयैरदृप्तस्तृप्तस्त्रिलोकीतिलकत्वमेति ॥ ५५ ॥

टीका-एति गच्छति । कोऽसौ, गृही । किं कुर्वन्, अनुरज्यन् स्वयमेवानुरागं कुर्वन् । कथं, निर्व्याजं निश्छद्म । क्व, प्रतीत प्रसिद्धो जैनत्वगुणो यस्य तस्मिन् प्रतीतजैनत्वगुणे । किं,एति त्रिलोकीतिलकत्वं परमपदं । किंभूतो भूत्वा, तृप्त नितृष्णीभूत इत्यर्थः । कैः,अभ्युदयैराज्ञैश्वर्यादिभिः । किंविशिष्टः सन्, अदृप्तोऽकृतमदः सम्यक्त्वसहचारिपुण्योदयवशात् । किं कुर्वन्, स्फुरन् दीप्यन् । क्व,धुरि अग्रे । केषां तद्गुणानां प्रतीतजैनत्वगुणानां । कथम् आसंसृति संसारं यावत्, भवे भवे जैनानामग्रणीर्भवन्नित्यर्थः ॥ ५५ ॥

गृहस्थाचार्याय तदभावे मध्यमपात्राय वा कन्यादिदानं पाक्षिकश्रावकस्य कर्तव्यतयोपदिशति—

निस्तारकोत्तमायाथ मध्यमाय सधर्मणे ।
कन्याभूहेमहस्त्यश्व-रथरत्नादि निर्वपेत् ॥ ५६ ॥

टीका—निर्वपेत् दद्यात् गृही । किं तत्, कन्या कुमारीं, भूर्भूमिं, हेम काञ्चनं, हस्ती गजः, अश्वो वाजी, रथः स्यन्दनः, रत्नं वज्रादि, आदिशब्देन वस्त्रगृहनगरादेवजातीयकमन्यदपि त्रिवर्गसाधनाश्रयं वितरेत् । कस्मै,सधर्मणे समान आत्मना समो धर्मः क्रियामन्त्रव्रतादिलक्षणो गुणो यस्य तस्मै किंविशिष्टाय, निस्तारकोत्तमाय संसारार्णवोत्तारकाणां गृहिणां मध्ये प्रधानाय न केवलं तस्मै तदलाभे च मध्यमाय अनुत्तमाधमाय । अथशब्दोऽत्र पक्षान्तरसूचनेऽधिकारे वा । अत्र जघन्यविषया समदत्ति व्याख्याय मध्यमविषयाऽऽसावधिमिति प्रते इत्यर्थः । यत्पक्षया गृहस्थस्य गुणाधिकस्यापि मध्यमपात्रत्वात् ॥ ५६ ॥

सधर्मभ्यः कन्यादिदाने हेतुमाह—

आधानादिक्रियामन्त्र-व्रताद्यच्छेदवाञ्छया ।
प्रदेयानि सधर्मभ्यः कन्यादीनि यथोचितम् ॥ ५७ ॥

टीका-प्रदेयानि प्रकृष्टं कृत्वा दातव्यानि गृहिणा । कानि, कन्यादीनि । केभ्यः, सधर्मभ्यः साधर्मिकेभ्यः । कथं, यथोचितं यो यो यद्दानस्य योग्यस्तस्मै

तस्मै तद्दातव्यमित्यर्थः। कया, आधानादीत्यादि-आधानं गर्भाधानविधानमादिर्यासां प्रीतिसुप्रीत्यादीनामार्षोक्तानां क्रियाणां ता आधानादयस्ताश्च ताः क्रियाश्च कर्माणि गृहस्थानामवश्यकार्याणि, मन्त्राः प्रत्यासत्तेराधानादिक्रिया-सम्बन्धिनः पञ्चाशदुक्ता अपराजितमन्त्रो वा, व्रतानि मद्यविरत्यादीनि आदिशब्दाद्देवपूजापात्रदानादिधर्मकर्माणि तेषामविच्छेदः सान्तत्येन प्रवृत्तिस्तत्र वाञ्छा आकांक्षा तया ॥ ५७ ॥

सत्कन्यादानविधिं तत्फलं चाह—

निर्दोषां सुनिमित्तसूचितशिवां कन्यां वरार्हैर्गुणैः
स्फूर्जन्तं परिणाय्य धर्म्यविधिना यः सत्करोत्यञ्जसा ।
दम्पत्योः स तयोस्त्रिवर्गघटनात्त्रैवर्गिकेष्वग्रणी-
र्भूत्वा सत्समयास्तमोहमहिमा कार्ये परेऽप्यूर्जति ॥ ५८ ॥

टीका-यो गृही। अञ्जसा श्रद्धापरत्वेन। साधर्मिकं सत्करोति सम्मानयति यथोचितवस्त्रादिदानेनोपचरति। किं कृत्वा, परिणाय्य सुनिमित्तं वरणविधानमग्निदेवद्विजसाक्षिकं च पाणिग्रहणं विवाहं तस्य कारयित्वा। केन, धर्म्यविधिना धर्म्यो धर्मादनपेतो ब्राह्मप्राजापत्यार्षदैवाख्याश्चत्वारो विवाहास्तेषां यथार्हं मयो-

१ धर्म्यविवाहविधिरार्षे यथा—
ततोऽस्य गुर्वनुज्ञानादिष्टा वैवाहिकी क्रिया ।
वैवाहिके कुले कन्यामुचितां परिणेष्यतः ॥
सिद्धार्चनविधिं सम्यङ्निर्वर्त्य द्विजसत्तमाः ।
कृताग्नित्रयसम्पूजाः कुर्युस्तत्साक्षिकां क्रियाम् ॥
पुण्याश्रमे क्वचित्सिद्ध-प्रतिमाभिमुखं तयोः ।
दम्पत्योः परया भूत्या कार्यः पाणिग्रहोत्सवः ॥
वेद्यां प्रणीतमग्नीनां त्रयं द्वयमथैककम् ।
ततः प्रदक्षिणीकृत्य प्रसज्य विनिवेशनम् ॥
पाणिग्रहणदीक्षायां नियुक्तं तद्वधूवरम् ।
आसप्ताहं चरेद्ब्रह्म-व्रतं देवाग्निसाक्षिकम् ॥
( शेषम्यमपर्वे। )

रोण । किं कुर्वन्त, स्फूर्जन्त विचारकच्चेतसि स्फुरन्त । कै,–गुणै । किंविशिष्टै, चराहैंवरयितुर्योग्यै कुलशीलसानाथ्यविद्यावित्तसौरूप्ययोग्यवयोभिरेवै । कां परिणाय्य, कन्यां । किंविशिष्टा, निर्दोषां सामुद्रिकशास्त्रोक्तदोषरहिता । पुन किंविशिष्टा, सुनिमित्तसूचितशिवा सुनिमित्तै सामुद्रिकदूतज्योतिषादि-भविष्यच्छुभाशुभज्ञानोपायै सूचित प्रकाशित शिव स्वस्य परस्य च कल्याणं यस्यास्ता । स किमित्याह—ऊर्जेति समर्थो भवति । कोऽसौ, स यथाविधि कन्यादाता । क, कार्येऽवश्यकृत्ये । किंविशिष्टे परेऽपि पारलौकिके न केवल लौकिके इत्यपिशब्दार्थ । किंविशिष्ट सन्, सद्दित्यादि–सत्समय जिनप्रवच-नमार्थसञ्ज्ञप्तिर्वा तेनास्तो निराकृतो मोहस्य चारित्रावरणकर्मणो महिमा गुरुत्वं येन स तथोक्त । किं कृत्वा, भूत्वा । किंभूतो,–ऽग्रणी प्रधान । केषु मध्ये, त्रैवर्गिकेषु धर्मार्थकामानाचरत्सु । कस्मात् त्रिवर्गघटनात् धर्मार्थकामसम्पा-दनात् । कयो,–स्तयो स्वकन्यातद्वरलक्षणयोर्दम्पत्योर्नायापत्यो ॥ ५८ ॥

सत्कन्याप्रदातु साधर्मिकोपकारकरणद्वारेण महान्त सुकृतलाभमवभासय, न्नाह—

कान्त्वा स्वस्योचिता भूमिं तीर्थभूमीर्विहृत्य च ।
स्वगृह प्रविशेद्भूत्या परया तद्वधूवरम् ॥
विमुक्तकङ्कण पश्चात्स्वगृहे शयनीयकम् ।
अधिशय्य यथाकाल भोगाङ्गैरुपलालितम् ॥
सन्तानार्थमृतावेव कामसेवा मिथो भजेत् ।
शक्तिकालव्यपेक्षोऽय क्रमोऽशक्तेष्वतोऽन्यथा ॥
१–२ द्वौ हि धर्मौ गृहस्थाना लौकिक पारलौकिक ।
लोकाश्रयो भवेदाद्य पर स्यादागमाश्रय ॥
सर्व एव हि जैनाना प्रमाण लौकिको विधि ।
यत्र सम्यक्त्वहानिर्न यत्र न व्रतदूषणम् ॥
स्वजात्यैव विशुद्धाना वर्णानामिह रत्नवत् ।
तत्क्रियाविनियोगाय जैनागमविधि परम् ॥
यद्भवभ्रान्तिनिर्मुक्ति हेतुधीस्तत्र दुर्लभा ।
ससारव्यवहारे तु स्वत सिद्धे वृथाऽऽगम ॥

सत्कन्यां ददता दत्तः सत्रिवर्गो गृहाश्रमः ।
गृहं हि गृहिणीमाहुर्न कुड्यकटसंहतिम् ॥ ५९ ॥

टीका–दत्तो वितीर्णः सगृहिणा साधर्मिकाय । कोऽसौ, गृहाश्रमः गृहं आश्रमो धर्मानुष्ठानं गृहमेव वाऽऽश्रमस्तपःस्थानं । किं कुर्वता, ददता । कां, सत्कन्यां सती प्रशस्ता कौलीन्यादिगुणोपेता सामुद्रिकोक्तदोषरहिता च कन्या कुमारी सत्कन्या तां । किंविशिष्टो गृहाश्रमो दत्तः, सत्रिवर्गो धर्मार्थकामानां सद्गृहिणीमूलत्वात् । तथाहि–धर्मः स्वदारसन्तोषाख्याणुव्रतलक्षणो देवादिपरिचरणस्वरूपः सत्पात्रदानादिरूपश्च, अर्थो वैश्यादिव्यसनव्यावर्तनेन निष्प्रत्यूहमर्थस्योपार्जनादुपार्जितस्य च रक्षणाद्रक्षितस्य च वर्द्धनाद्यथाभाग्यं ग्रामसुवर्णादिसम्पत्तिः, 'सकलपरमणीयस्य प्रीतिसम्भोगशोभिनो हर्षितस्याभिलापस्य नाम काम' इति स्मृतिरिति वचनात् कामश्च यथेष्टमाभिमानिकरसानुविद्धसर्वेन्द्रियप्रीतिहेतुः कुलाङ्गनाधीनो सुखलीन । हि यस्मात् । आहुः ब्रुवन्ति विद्वांसः । किं, गृहं । कां, गृहिणीं कुलपत्नीं । न आहुः । किं तत्, गृहं । कुड्यकटसंहतिं भित्तिवंशादिसङ्घातमात्रम् ॥ ५९ ॥

कुलस्त्रीपरिग्रहस्य लोकद्वयाभिमतफलसम्पादकत्वात् प्रवर्गिकस्य विधेयत-योपदिशति—

धर्मसन्ततिमक्लिष्टां रतिं वृत्तकुलोन्नतिम् ।
देवादिसत्कृतिं चेच्छन्सत्कन्यां यत्नतो वहेत् ॥६०॥

टीका—वहेत् परिणयेत । कोऽसौ, श्रावकः । कां, सत्कन्यां सतीं प्रशस्तां सतश्च सज्जनस्य कन्यां सत्कन्या तां । कस्मात्, यत्नतः प्रयत्नेन सादरतया । किं कुर्वन्, इच्छन् आकांक्षन् । किं किं, धर्मसन्ततिं धर्मार्थं सन्ततिरपत्यानि अथवा धर्मस्य सन्ततिरविच्छेदो धर्मसन्ततिस्तां, तथा अक्लिष्टामनुपहतां रतिं सम्भोगं, तथा वृत्तकुलोन्नतिं वृत्तस्याचारस्य कुलस्य च वंशस्य गुरुस्य वा उन्नतिरुद्गतिस्तां, तथा देवादिसत्कृतिं देवद्विजातिथिबान्धवसत्कारम् ॥६०॥

दुष्कलत्रस्याकलत्रस्य वा पात्रस्य भूम्यादिदानात् कश्चिदुपकारः स्यादिति सुधर्मसख्य सत्कन्याविनियोगेन सधर्माणमनुगृह्णीयादिति विधिश्यन्यार्थ-नाधर्मयोन्तरन्यासेन समर्थयते—

सुकलत्रं विना पात्रे भूहेमादिव्ययो वृथा।
कीटैर्दन्दश्यमानेऽन्तः कोऽम्बुसेकाद्द्रुमे गुणः ॥६१॥

टीका—भवति। कोऽसौ, भूहेमादिव्यय भूमिसुवर्णादिदान। कथम्भूतो, वृथा व्यर्थ। क्व, पात्रे संयुज्यमानमोक्षकारणगुणे गृहिणि। कथं, विना। किं तत्, सुकलत्रं सत्पत्नीं। अत्र दृष्टान्तमाह—को भवति, न कश्चित्। कोऽसौ, गुण उपकारः। कस्मात्, अम्बुसेकात् जलसेचनात्। क्व, द्रुमे वृक्षे। कि क्रियमाणे, दन्दश्यमाने गर्हितं भक्ष्यमाणे। कैः, कीटैः घुणैः। क्व, अन्तर्मध्ये।

विषयसुखोपभोगेनैव चारित्रमोहोदयोद्रेकस्य शक्यप्रतीकारत्वात्तद्द्वारेणैव तस्मादपवर्त्यमानमिव साधर्मिकमपि विषयेभ्यो व्युपरमयेदित्युपदेशार्थमाह—

विषयेषु सुखभ्रान्तिं कर्माभिमुखपाकजाम्।
छित्वा तदुपभोगेन त्याजयेत्तान्स्ववत्परम् ॥ ६२ ॥

टीका—त्याजयेद्विमोचयेत्। कोऽसौ, सद्गृही। कं, परं कन्यादिदानेन विषयीक्रियमाणं साधर्मिकं। कान् तान्, सुकलत्रादिविषयान्। किंवत्, स्ववत् आत्मानं यथा। किं कृत्वा, छित्वा प्रशमय्य। कां, सुखभ्रान्तिं सुखयन्तीति सुखा सुखहेतव इमे सुखं वेति विपर्यासमतिं। केषु, विषयेषु। किंविशिष्टां, कर्माभिमुखपाकजां कर्मणश्चारित्रमोहस्याभिमुखो निजफलदानोद्यत पाको रस कर्माभिमुखपाकस्तस्मात् जातां। छित्वा प्रशमय्य। कां, सुखभ्रान्तिं। केन, तदुपभोगेन विषयानुभवनेन ॥ ६२ ॥

दुष्षमाकालवशात्प्रायेण पुरुषाणामाचारविप्लवदर्शनाद्विचिकित्साकुलितचित्तस्य दातु सौचित्यविधानार्थं चतुर श्लोकानाह—

दैवाल्लब्धं धनं प्राणैः सहावश्यंविनाशि च।
बहुधा विनियुञ्जानः सुधीः समयिकान्क्षिपेत् ॥ ६३ ॥

टीका—क्षिपेत् धिगिमान् सम्भाषणमात्रस्याप्ययोग्यानित्याद्यवर्णवादेन तिरस्कुर्यादिति काक्वा न क्षिपेदिति प्रतिषेधे पर्यवस्यति। कोऽसौ, सुधी श्रेयोऽर्थी गृही। कान्, समयिकान् समयाश्रितान् गृहस्थान् यतीन् वा। किं कुर्वाणो, विनियुञ्जानो व्ययमान। किं तत्, धनं। कतिधा, बहुधा बहुभि

प्रकारैः लज्जाभयपक्षपातादिभिः। किंविशिष्टं धनं, लब्धं प्राप्तं। कस्मात्, दैवात्पुण्योदयान्न पुरुषकारात्, तस्य संसारे गौणत्वात्। किंविशिष्ट,-मवश्यं-विनाशि नियमेन गत्वरं। कथं, सह। कैः, प्राणैः ॥ ६३ ॥

किं तर्हि कुर्यादित्याह—

**विन्यस्यैदंयुगीनेषु प्रतिमासु जिनानिव ।**
**भक्त्या पूर्वमुनीनर्चेत्कुतः श्रेयोऽतिचर्चिनाम् ॥ ६४ ॥**

टीका—अर्चेत् पूजयेत्। कोऽसौ, सद्गृही। कान्, पूर्वमुनीन् प्राक्तनसाधून्। कया, भक्त्या। किं कृत्वा, विन्यस्य नामादिविधिना निक्षिप्य। केषु, ऐदंयुगीनेषु अस्मिन् युगे साधुषु। कास्विव कान्, प्रतिमासु जिनानिव प्रतिबिम्बेष्वर्हतो यथा। यत कुतो भवति, न कुतश्चित्। किं तत्, श्रेय पुण्यं। केषाम्, अतिचर्चिनाम् अतिमात्रं क्षोदकारिणाम् ॥ ६४ ॥

---

१ भुक्तिमात्रप्रदाने तु का परीक्षा तपस्विनाम् ।
ते सन्त सन्त्वसन्तो वा गृही दानेन शुध्यति ॥
सर्वारम्भप्रवृत्ताना गृहस्थाना धनव्यय ।
बहुधाऽस्ति ततोऽत्यर्थं न कर्तव्या विचारणा ॥
यथा यथा विशिष्यन्ते तपोज्ञानादिभिर्गुणै.
तथा तथाऽधिकं पूज्या मुनयो गृहमेधिभि ॥
दैवाल्लब्धं धनं धन्यैर्वप्तव्यं समयाश्रिते ।
एको मुनिर्भवेल्लभ्यो न लभ्यो वा यथागमम् ॥
उच्चावचजनप्राय समयोऽयं जिनेशिनाम् ।
नैकस्मिन्पुरुषे तिष्ठे देकस्तम्भ इवालय. ॥
ते नामस्थापनाद्रव्य भावन्यासैश्चतुर्विधा ।
भवन्ति मनुयः सर्वे दानमानादिकर्मसु ॥
उत्तरोत्तरभावेन विधिस्तेषु विशिष्यते ।
पुण्यार्जने गृहस्थाना जिनप्रतिकृतिष्विव ॥
काले कलौ चले चित्ते देहे चान्नादिकीटके ।
एतच्चित्रं यदद्यापि जिनरूपधरा नराः ॥

पुनस्तदर्थसमर्थनार्थमाह—

**भावो हि पुण्याय मत शुभ पापाय चाशुभ ।**
**तद्दुष्यन्तमतो रक्षेद्धीर समयभक्तित ॥ ६५ ॥**

टीका—हि यस्मात् । पुनरिष्ट । कोऽसौ, भाव परिणाम । कर्म, पुण्याय सुकृतनिमित्त । किंविशिष्ट, शुभ प्रशस्त । तथा मत । कोऽसौ, भाव । किंविशिष्टो,-ऽशुभोऽप्रशस्त । कर्म, पापाय पातकनिमित्त । यत एवमत पुनस्मात्कारणात् । रक्षेन्निवारयेत् । कोऽसौ, धीरोऽविकारप्रकृति । क त, भाव । किं कुर्वन्त, दुष्यन्त विकुर्वाण । कस्मात्, समयभक्तित जिन-शासन कलौ धारयन्तोऽमी अतो जिनवन्मान्या इत्यनुरागयुक्त्या ॥ ५६ ॥

ज्ञानतपसा पृथक् समुदितयोश्च तद्वता च पूज्यत्वे युक्तिमाह—

**ज्ञानमर्च्यं तपोऽङ्गत्वात्तपोऽर्च्यं तत्परत्वत ।**
**द्वयमर्च्यं शिवाङ्गत्वात्तद्वन्तोऽर्च्या यथागुणम् ॥ ६६ ॥**

टीका—अर्च्यं पूज्य गृहिणा । किं तत्, ज्ञान साधकस्य दीक्षायात्राप्रति-ष्ठाद्युपयोगि । कुत, तपोऽङ्गत्वात् अनशनादितपोनिमित्तत्वात् । तथा अर्च्यं । किं तत्, तपो नैष्ठिकस्य । कस्मात् तत्परत्वत ज्ञानातिशयहेतुत्वात् ज्ञान परमुत्कृष्ट यस्मादिति व्युत्पत्त्याश्रयणात् । तथा अर्च्यं । किं तत्, द्वय ज्ञानतपोयुगल गणाधिपस्य । कस्मात्, शिवाङ्गत्वान्मोक्षकारणत्वात् । तथा अर्च्या । के ते, तद्वन्तो ज्ञानिनस्तपस्विनो ज्ञानतपोयुक्ताश्च । कथ, यथागुण यो यो गुणो यस्याधिकस्तेन तत ॥ त विशेषेण पूजयेदित्यर्थ ॥ ६६ ॥

अथ मिथ्यादृष्टश्च सुपात्रेष्वेवाप्रदानादुत्पन्नस्य पुण्यस्य फलविशेषमपात्रे चार्थविनियोगस्य वैयर्थ्यं प्रतिपादयितुमाह—

**न्यग्मध्योत्तमकुत्स्यभोगजगतीभुक्तावशेषाद्वृषा-**
**त्तादृक्पात्रवितीर्णभुक्तिरसुदृग्देवो यथास्वं भवेत् ।**

---

यथा पूज्य जिनेन्द्राणा रूप लेपादिनिर्मितम् ।
तथा पूर्वमुनिच्छाया पूज्या सम्प्रति सयता ॥

( पूर्वपृष्ठादागत । )

सद्दृष्टिस्तु सुपात्रदानसुकृतोद्रेकात्सुभुक्तोत्तम-
स्वर्भूमर्त्यपदोऽश्नुते शिवपदं व्यर्थस्त्वपात्रे व्ययः ॥६७॥

टीका—भवेत् जायेत । कोऽसौ, असुदृग्मिथ्यादृष्टिर्जीव । किं भवेत्, देव सुर । कथं, यथास्वं यद्यस्यात्मीयं दानं तत्तद्दाननतिक्रमेणेत्यर्थः । किंविशिष्टः सन्, सात्रपात्रवितीर्णभुक्तिः साद्भ्यो न्यगमध्योत्तमकुत्सितेभ्यः पात्रेभ्यो वितीर्णा दत्ता भुक्तिराहारो येन स तथोक्तः । कस्माद्भवेत्, वृषात् पुण्यविशेषात् । किंविशिष्टात्, न्यगित्यादि,–न्यक् जघन्य एकपल्योपमभोग्यत्वात्, उत्तमस्त्रिपल्योपमभोग्यत्वात्, कुत्स्य कुत्सितो कुपात्रदानफलत्वात्कृति-त्वादेकोरुकादिदेहयोगाच्च । न्यक्च मध्यमश्च उत्तमश्च कुत्स्यश्च न्यग्मध्योत्तम-कुत्स्यास्ते च ते भोगाश्च न्यग्मध्योत्तमकुत्स्यभोगास्तैरुपलक्षिता जगत्यो भूमयो जघन्यभोगभूमिर्मध्यमभोगभूमिरुत्तमभोगभूमिः कुभोगभूमिश्चेति यतस्तास्तासु भुक्त्वा कल्पवृक्षादिसम्पादितेष्टविषयोपभोगसुखेन निर्जीर्णश्चासा ववशेषश्चोद्भूतो यो वृषस्तस्मात् । तत्र मिथ्यादृष्टिर्जघन्यपात्राय सुदृष्टिलक्षणा याहारदानं दत्त्वा जघन्यभोगभूमौ, मध्यमपात्राय सम्यक्त्वाणुव्रतपवित्राय मध्यभोगभूमौ, उत्तमपात्राय सम्यग्दर्शनमहाव्रतभूषिताय चोत्तमभोगभूमौ, निरातङ्कभोगान् भुक्त्वा स्वायुःक्षये यथायोग्यं गच्छेत् । तत्तत्पात्रसन्निधाना तथाविधशुभपरिणामविशेषोपपत्त्या तादृक्पुण्यप्रचयानुभावात् । स एव च कुपात्राय सम्यक्त्वरहितायानतपोयुक्तायाहारं दत्त्वा कुभोगभूमौ भिर्भूपार्थिवक-गुहावृक्षमूलनिवास्येकोरुकादिशरीरो भूत्वा स्वसमानपत्न्या सह यथास्वं निराबाधतया भोगं भुक्त्वा पल्योपममात्रस्वायुःक्षये मृत्वा स्वर्गे वाहनदेवो ज्योतिष्को वा व्यन्तरो वा भवनवासी वा भूत्वा दीर्घं दुर्गतिदुःखानि भुञ्जन् संसरति । किं च ये भोगभूमिषु ये च मानुषोत्तरपर्वतादर्वाक् प्राक्च स्वयम्प्रभ-पर्वतात्तिर्यञ्चो ये च म्लेच्छराजगजतुरगादयो वेश्यादयो वा नीचा मानो

पात्रापात्रलक्षणं यथा–

१–२ उत्कृष्टपात्रमनगारमणुव्रताढ्यं
मध्यं व्रतेन रहितं सुदृशं जघन्यम् ।
निर्दर्शनं व्रतनिकाययुतं कुपात्रं
युग्मोज्झितं नरमपात्रमिदं हि विद्धि ॥

भोगभाजो दृश्यन्ते ते सर्वे कुपात्रदानतो यथापरिणाममुत्पन्नेन मिथ्यात्व-सहचारिणा पुण्येन तथा स्युरिति निर्णय । अश्नुते प्राप्नोति । कोऽसौ, सद्दृष्टि सम्यक्त्वविशुद्धो जीव । तुर्विशेषे । किं, शिवपद । किंभूतो भूत्वा, सुष्ठु यथेष्ट भुक्तानि उत्तमानि महर्द्धिकानि स्वर्भुवा कल्पोपपन्नदेवाना मर्त्याना च चक्रवर्त्यादीना पदानि येन स सुभुक्तोत्तमस्वर्भूमर्त्यपद । कस्मात्, मुदाय्यदानसुकृतोद्रेकात् सुपात्राय महातपोधनाय त्रिविधपात्राय वा दान मनुग्रहार्थं स्वस्यातिसर्गस्तस्माज्जात सुकृत पुण्य तस्योद्रेकादुदयात् । भवेत् । कोऽसौ व्यय अर्थविनियोग । क, अपात्रे[1] सम्यक्त्वव्रतरहितप्राणिनि । किंविशिष्टो, व्यर्थो विपरीतफलो निष्फलो वा ॥ ६७ ॥

इदानीं पात्रदानपुण्योदयफलभाजा भोगभूमिजाना जन्मप्रभृति सप्ताह-सप्तकभाविनीरवस्था निर्देष्टुमाह–

---

उत्तमपत्त साहू मज्झमपत्त च सावया भणिया ।
अविरदसम्माइट्ठी जहण्णपत्त मुणेयव्वम् ॥
मिथ्यात्वग्रस्तचित्तेषु चारित्रा + + भागिषु ।
दोषायैव भवेद्दान पय पानामवाहिषु ॥
कारुण्यादथवौचित्यात्तषा किञ्चिद्दिशन्नपि ।
दिशदुद्धृतमेवान्न गृहे भु च न कारयेत् ॥
सत्कारादिविधावपा दर्शन दूषित भवेत् ।
यथा विशुद्धमप्यम्बु विषभाजनसगमात् ॥
पात्राय विधिना दत्वा दान मृत्वा समाधिना ।
अच्युतान्तेषु कल्पेषु जायन्ते शुद्धदृष्टय ॥
ज्ञात्वा धर्मप्रसादेन तत्र प्रभवमात्मन ।
पूजयन्ति जिनार्च्यास्ते भक्त्या धर्मस्य वृद्धये ॥
१–अपात्रदानत किञ्चिन्न फल पापत परम् ।
लभ्यते हि फल खेदो वालुकापुञ्जपेषणे ॥
अपात्राय धन दत्ते यो हित्वा पात्रमुत्तमम् ।
साधु विहाय चौराय तदर्पयति स स्फुटम् ॥

सप्तोत्तानशया लिहन्ति दिवसान्स्वांगुष्ठमार्यास्ततः
कौ रिङ्गन्ति ततः पदैः कलगिरो यान्ति स्खलद्भिस्ततः ।
स्थेयोभिश्च ततः कलागुणभृतस्तारुण्यभोगोद्गता
सप्ताहेन ततो भवन्ति सुदृगादानेऽपि योग्यास्ततः ॥६८॥

टीका—लिहन्ति आस्वादयन्ति । के, आर्या भोगभूमिजमनुजा । कं, स्वांगुष्ठं । कान्, दिवसान् । कति, सप्त जन्मानन्तरं सप्ताहमित्यर्थः । किंविशिष्टाः सन्तः, उत्तानशया उत्तानमनधोमुखं शेरते । ततः प्रथमसप्ताहानन्तरं रिङ्गन्ति पद्भ्यां सर्पन्ति । के, आर्याः । कस्यां, कौ भूमौ । कान्, सप्तदिवसान् । ततो द्वितीयसप्ताहानन्तरं यान्ति सञ्चरन्ति । के, आर्याः । कस्यां, कौ । कैः, पदैः पादन्यासैः । किं कुर्वद्भिः, स्खलद्भिर्यत्रतत्रपतद्भिः । किंविशिष्टाः सन्तः, कलगिरो मनोहरवाचः । ततस्तृतीयसप्ताहानन्तरमार्याः सप्ताहेन सप्तभिर्दिनैः स्थेयोभिः स्थिरतरैः पदैः यान्ति गच्छन्ति । कस्यां, कौ पृथिव्यां । ततश्चतुर्थसप्ताहानन्तरमार्याः सप्ताहेन सप्तभिर्दिनैः कलागीतादिगुणांश्च लावण्यादीन् बिभ्रतो भवन्ति । ततः पञ्चमसप्ताहानन्तरं सप्ताहेनार्याः तारुण्यभोगोद्गता उदितोदितयौवना अविच्छिन्नमयादृष्टविषयाश्च भवन्ति । ततः षष्ठसप्ताहानन्तरं सप्ताहेनार्याः योग्या भवन्ति । क, सुदृगादाने सम्यक्त्वग्रहणे । अपिर्विस्मये ॥ ६९ ॥

अथ मुनिदेयनिर्णयार्थमाह—

तपः श्रुतोपयोगीनि निरवद्यानि भक्तितः ।
मुनिभ्योऽन्नौषधावास पुस्तकादीनि कल्पयेत् ॥ ६९ ॥

टीका—कल्पयेदुपकारयेत् । सद्गृही । कानि, अन्नौषधावासपुस्तकादीनि । आदिशब्देन पिच्छिकाकमण्डल्वादीनि । केभ्यो, मुनिभ्यः संयतेभ्यः । कस्मात्, भक्तितः । किंविशिष्टानि, तपःश्रुतोपयोगीनि तपसः श्रुतज्ञानस्य चोपकारकाणि । पुनः किंविशिष्टानि, निरवद्यानि पिण्डशुद्ध्युक्तोद्गमोत्पादनादिदोषरहितानि ॥ ६९ ॥

अथादिदानफलानां क्रमेण निदर्शनान्याह—

भोगित्वाद्यन्तशान्तिप्रभुपदमुदयं संयतेऽन्नप्रदाना
च्छ्रीषेणो रुग्निषेधाद्धनपतितनया प्राप सर्वौषधर्द्धिम् ।
प्राक्तज्जन्मर्षिवासावनशुभकरणात्सूकरः स्वर्गमग्र्यं
कौण्डेशः पुस्तकार्चावितरणविधिनाऽप्यागमाम्भोधिपारम् ॥

टीका—प्राप लब्धवान् । कोऽसौ, श्रीषेणो नाम राजा । कम्, उदयम-भ्युदयं । किंविशिष्टं, भोगित्वाद्यन्तशान्तिप्रभुपदं भोगित्वमुत्तमभोगभूमिज त्वमाद्यं आद्यन्ते च शान्तिप्रभोः शान्तिनाथतीर्थङ्करस्य पदं यस्य तं । कस्माद्,-अन्नप्रदानात् विधिवदाहारवितरणात् । क्व, संयते संयमभाजि आदित्यगत्या रिञ्जयसञ्ज्ञचारणर्षियुगले । बीजत्वमात्रविवक्षाऽत्र । तथाविधाभ्युदयस्यो त्पुण्यविशेषोदयसम्पादकत्वात् । तथा प्राप । काऽसौ, धनपतितनया वृषभसे नाभिधाना पूर्वभवे राज्ञो देवकुलस्य सम्मार्जिका । कां प्राप सर्वौषधर्द्धिं सर्वेषां ज्वरातिसारादिव्याधीनामौषधं चिकित्सितं तस्य ऋद्धिरव्याहतसि द्धिता । कस्मात्, रुग्निषेधात् व्याधिप्रतीकारादौषधादेर्दोषनिषेधात् । क्व संयते तपोधने । तथा प्राप । कोऽसौ, शूकरो वराहः । कं, स्वर्गं । किंविशिष्टम् अग्र्यं सौधर्मे महर्द्धिकदेवत्वमित्यर्थः । कस्मात्, प्रागित्यादि-प्राक्च पूर्वं तच्च तात्कालिकं च प्राक्तने, प्राक्ते च ते जन्मनी च प्राक्तज्जन्मनी तयोः ऋषेर्वासा वने निवासरक्षणे तयोः शुभकारणं शुभाभिसन्धिपरिणामस्तस्मात् । पूर्वभवे मुनेरावासदानाभिप्रायेण तद्भवे च रक्षणाभिप्रायेणेत्यर्थः । तथा कौण्डेशोऽपि गोविन्दाख्यगोपालश्चरो ग्रामकूटपुत्रः सन् कौण्डेशो नाम मुनिश्च प्राप । कम्, आगमाम्भोधिपारं द्वादशाङ्गश्रुतसारपर्यन्तं । केन पुस्तकस्य अर्चाया पूजाया वितरणस्य च दानस्य विधिना करणेन ॥ ३० ॥

जिनधर्मानुबन्धार्थमसतां मुनीनामुत्पादने सतां च गुणातिशयसम्पादने प्रयत्नविधानार्थमाह—

जिनधर्मं जगद्बन्धुमनुबध्दुमपत्यवत् ।
यतीञ्जनयितुं यस्येत्तथोत्कर्षयितुं गुणैः ॥ ३१ ॥

टीका—यस्येत् प्रयतेत । सद्गृही । किं कर्तुं,जनयितुम् अपूर्वानुत्पादयितुं । कान् साधून् । किंवत्, अपत्यवत् पुत्रान्यथा । किं कर्तुम्, अनुबन्धु सन्तत्या प्रवर्तयितुं । कं, जिनधर्मं । किंविशिष्टं, जगद्बन्धुं लोकानामुपकारकं । तथा यस्येत् । किं कर्तुम्, उत्कर्षयितुम् उत्कृष्टान् कर्तुं । कान्, वर्तमानान् यतीन् । कैः,-गुणैः श्रुतज्ञानादिभिः । जिनधर्ममित्यादि पूर्ववदत्रापि योज्यम् ॥ ७१ ॥

सम्प्रति पुरुषाणां दुष्कर्मगुणाशक्तुणातिशयाभिद्धदर्शनात्सदुत्पादने निष्फलः प्रयत्न इति गृहिणो मनोभङ्गनिषेधार्थमाह—

श्रेयो यत्नवतोऽस्त्येव कलिदोषाद्गुणद्युतौ ।
असिद्धावपि तत्सिद्धौ स्वपरानुग्रहो महान् ॥ ७२ ॥

टीका—अस्त्येव नियमेन भवति । किं तत्, श्रेयः पुण्यं । कस्य, यत्नवतः प्रयतमानस्य गृहस्थस्य । कस्मिन्विषये, गुणद्युतौ गुणातिशयशालिनां विषये । कस्यां सत्याम् असिद्धावपि भाव्यमानगुणद्युतावनिष्पत्तावपि । कस्मात्, कले पञ्चमकालस्य पापकर्मणो वा दोषादपराधात् प्रातिलोम्यादित्यर्थः । तत्सिद्धौ महालाभमाह । भवति । कोऽसौ, स्वपरानुग्रहः स्वस्य वैय्यावृत्यकरस्य परस्य च साधर्मिकस्य सामान्यजनस्य च अनुग्रहः उपकारः । किंविशिष्टो, महान् विपुलः । कस्यां सत्यां, तत्सिद्धौ तेषां गुणद्युतौ निष्पत्तौ । कस्मात्, कलिदोषादुष्कर्मप्रतिघातात् दैवदुर्योगादित्यर्थः ॥ ७२ ॥

महाव्रतमणुव्रतं वा बिभ्रत्यः स्त्रियोऽपि धर्मपात्रतयाऽनुग्राह्या इति समर्थयितुमाह—

आर्यिकाः श्राविकाश्चापि सत्कुर्याद्गुणभूषणाः ।
चतुर्विधेऽपि सङ्घे यत्फलत्युप्तमनल्पशः ॥ ७३ ॥

टीका—सत्कुर्याद्यथोक्तविनयप्रतिपत्त्यादिना आवर्जयेत् सद्गृही । काः, आर्यिका उपचरितमहाव्रतधरा स्त्री, न केवलं ताः श्राविकाश्च यथाशक्तिमूलोत्तरगुणभृतः तदुपासिकाश्च । अपिशब्दाच्च केवलं व्रतिन्योऽव्रतिनीरपि सन्मानयेदित्यर्थः । किंविशिष्टाः, गुणभूषणाः गुणाः श्रुततपःशीलादयो भूषणान्यलङ्करणानि यासां ताः । यद्यस्मात् । फलानि इष्टं सम्पादयति । किं तत्, दत्तं

विधिवत्प्रयुक्त मल्पसम्पादि । क्व, सङ्घे गुणसङ्घाते प्राणिगणे । किंविशिष्टे, चतुर्विधे यत्यार्यिकाश्रावकश्राविकाप्रकारे । न केवलमर्हच्चैत्यचैत्यालयश्रुतेषु विधिवत्प्रयुक्तमल्पमपि धनमल्पशः प्रभूतं भूत्वा फलति किं तर्हि, सङ्घेऽपीत्यपिशब्दार्थः । एतेन सप्त गृहिणो धनव्ययस्थानानीत्युपदिष्टं वेदितव्यम् ॥ ७३ ॥

एवं धर्मपात्रानुग्रहं गृहस्थस्यावश्यकार्यतयोपदिश्य सम्प्रति कार्यपात्रानुग्रहविध्युपदेशार्थमाह—

**धर्मार्थकामसध्रीचो यथौचित्यमुपाचरन् ।**
**सुधीस्त्रिवर्गसम्पत्त्या प्रेत्य चेह च मोदते ॥ ७४ ॥**

टीका—मोदते प्रहृष्यते । कोऽसौ सुधीः सद्बुद्धिः । कया, त्रिवर्गसम्पत्त्या धर्मार्थकामसम्पदा । क्व प्रेत्य जन्मान्तरे । इह अस्मिन्जन्मनि । द्वौ च शब्दौ जन्मद्वयेऽपि तुल्यकक्षतां सूचयतः । किं कुर्वन्—उपाचरन् उपकुर्वन् ऋणीकमन्यान् कुर्वन् । कान्, धर्मार्थकामसध्रीचः त्रिवर्गसहकारिणः पुरुषान् । कथं यथौचित्यं यथायथं यस्य यद्योग्यं दानमानादिकं तत्तत्तस्य तस्य कुर्वन्नित्यर्थः ॥ ७४ ॥

एवं समदत्तिं पात्रदत्तिं च प्रबन्धेनाभिधायेदानीं दयादत्तिं विशेषतस्सर्वेनोपदिशन्नाह—

**सर्वेषां देहिनां दुःखाद्बिभ्यतामभयप्रदः ।**
**दयार्द्रो दातृधौरेयो निर्भीः सौरूप्यमश्नुते ॥ ७५ ॥**

टीका—अश्नुते प्राप्नोति । कोऽसौ, अभयप्रदः प्राणादिभयापसारकः ।

---

१ तेनाधीतं श्रुतं सर्वं तेन तप्तं परं तपः ।
तेन कृत्स्नं कृतं दानं यः स्यादभयदानवान् ॥
धर्मार्थकाममोक्षाणां जीवितं मूलमिष्यते ।
तद्रक्षता न किं दत्तं हरता तन्न किं हृतम् ॥
दानमन्यद्भवेन्मा वा नरश्चेदभयप्रदः ।
सर्वेषामेव दानानां यतस्तद्दानमुत्तमम् ॥
यो भूतेष्वभयं दद्यात् भूतेभ्यस्तस्य नो भयम् ।
यादृग्वितीर्यते दानं तादृगास्वाद्यते फलम् ॥
सौरूप्यमभयादाहुराहाराद्भोगवान्भवेत् ।
आरोग्यमौषधाज्ज्ञेयं श्रुतात्स्यात् श्रुतकेवली ॥
(शेषमग्रपृष्ठे ।)

केषां देहिनां प्राणिनां । किं कुर्वतां, बिभ्यतां त्रस्यतां । कस्मात्, दु सा देहमनस्तापात् । कियतां सर्वेषां । किम्, अश्नुते, सौरूप्यं रूपातिशयं । उपलक्षणात्स्थैर्यं गाम्भीर्यं तेजस्वित्वमादेयत्वं सौभाग्यं सौम्यत्वं त्यागित्वं भोगित्वं यशस्वित्वं निरामयत्वं चिरजीवित्वमित्यादिदृष्टोक्तोत्तरगुणग्रामं । किंविशिष्टः सन् निर्भीः सर्वतो भयरहितः । किंविशिष्टोऽसौ, दयार्द्रः करुणामृदुहृदयः । पुनः किंविशिष्टो, दातृधौरेयः अन्नादिदातृणामग्रणीः । धर्मार्थकाममोक्षाणां जीवितं समूलस्याजीवितप्रदः किमभिमतं न ददातीति भावः ॥ ७५ ॥

अथ कर्मधर्म्यमित्यादि प्राक् सूचितं प्रपञ्चयन् श्रितभरणकृपादानपुरस्सरं दिवाभोजनमुपदिशन्नौषधादीनां रात्रावप्यप्रत्याख्येयतामाख्याति--

भृत्वाऽऽश्रितानवृत्त्याऽऽर्तान्कृपयाऽनाश्रितानपि ।
भुञ्जीताह्न्यम्बुभैषज्य-ताम्बूलैलादि निश्यपि ॥ ७६ ॥

टीका--भुञ्जीत भोजनादिकमुपयुञ्जीत गृही । क, अह्नि दिने । किं कृत्वा, भृत्वा पोषयित्वा । कान्, आश्रितान् अनन्यस्वामिकान् मानुषान् तिरश्चश्च । किंविशिष्टान्, अवृत्त्या जीवनाभावेनार्तान् अनवस्थितचित्तांस्तान्, न केवलमाश्रितानमाश्रितानपि भृत्वा । कया कृपया करुणया, न केवलं तया कृपया दिवा भक्तादिकं भुञ्जीत । निश्यपि रात्रावपि भुञ्जीत । किं तत् भैषज्यादि अम्बु जलं, भैषज्यमौषधं ताम्बूलं प्रसिद्धं, एला प्रसिद्धा । आदिशब्देन जातीफलकर्पूरादिमुखवासनप्रायद्रव्यपरिग्रहः ॥ ७६ ॥

मनोभूरिव कान्ताङ्गः सुवर्णाद्रिरिव स्थिरः ।
सरस्वानिव गम्भीरो विवस्वानिव भासुरः ॥
आदेयः सुभगः सौम्यस्त्यागी भोगी यशोनिधिः ।
भवत्यभयदानेन चिरजीवी निरामयः ॥

१ ताम्बूलमौषधं तोयं मुक्त्वाऽऽहारादिकां क्रियाम् ।

सेव्यानामप्यर्थानां सेवायामसम्भवत्यां कालपरिस्थित्या प्रत्याख्येयता मुपदिश्य तत्प्रत्याख्यानं फलवत्तया समर्थयते—

यावन्न सेव्या विषयास्तावत्तानाप्रवृत्तित. ।
व्रतयेत्सव्रतो दैवान्मृतोऽमुत्र सुखायते ॥ ७७ ॥

टीका—आप्रवृत्तितो व्रतयेत् आप्रवृत्तेर्निवृत्तिर्मेऽस्य ताम्बूलादेरिति नियमयेद्गृही । कान्, तान् ताम्बूलकामिन्यादिविषयान् । कथ, तावत् तावन्त कालं । यावत्कि, यावन्त कालं । न सेव्या न सवितु सम्भाव्या । के ते, विषया । एव कृते कि फलं स्यादित्याह-सुखायते सुखमनुभवति । कोऽसौ, स तथा कृतनियम । क, अमुत्र परलोके । किंविशिष्टो, मृत । कस्मात्, दैवात् कर्मवशात् । किंविशिष्ट सन्, सव्रतस्तथाव्रतभावित ॥७७॥

तपश्चर्यं च शक्तित इत्युक्त तद्विशेषविधिमभिधत्ते—

पञ्चम्यादिविधिं कृत्वा शिवान्ताभ्युदयप्रदम् ।
उद्द्योतयेद्यथासम्पन्निमित्ते प्रोत्सहेन्मन ॥ ७८ ॥

टीका—उद्द्योतयेत् उद्यापयेत् । क, पञ्चम्यादिविधिं पञ्चम्या पुष्पाञ्जलिमुक्तावलिरत्नत्रयादिविधान । किंविशिष्ट, शिवान्ताभ्युदयप्रद नि श्रेयसाव सानशक्रचक्रधरादिपदसम्पादक । किं कृत्वा यथाम्नाय परिसमाप्य । कथम् उद्द्योतयेत्, यथासम्पद्यथाविभव । ननु नित्यानुष्ठाने सत्यपि किमिदमनुष्ठीयते इत्याह-प्रोत्सहेत् नित्यानुष्ठानापेक्षया प्रकर्षेणोत्साह गच्छेत् मनश्चित्त । क, निमित्ते नैमित्तिकानुष्ठाने ॥ ७८ ॥

अथ व्रतग्रहणरक्षणच्छेदोपस्थापनविधीनुपदिशति—

समीक्ष्य व्रतमादेयमात्त पाल्य प्रयत्नतः ।
छिन्न दर्पात्प्रमादाद्वा प्रत्यवस्थाप्यमञ्जसा ॥ ७९ ॥

टीका—आदेय ग्राह्य श्रेयोऽर्थिना । कि तत् व्रत । कि कृत्वा, समीक्ष्य आत्मान देशकालस्थानसहायादींश्च सम्यगालोच्य । तथा पाल्य रक्षणीय व्रत । किंविशिष्टम्, आत्त तथा गृहीत । कस्मात्, प्रयत्नेन प्रकृष्टयत्नतया ।

टीका—त्यजेत् परिहरेत्। कोऽसौ, सुधीः शास्त्रबलेन हिंसायाः फलमेनदिति निश्चितमतिः। कां, हिंसां प्राणातिपातं। किंविशिष्टां, साङ्कल्पिकीं अमुं जन्तुमासाद्यार्थित्वेन हन्मीति सङ्कल्पपूर्विकां। आरम्भजा तु हिंसाऽशक्यप्रत्याख्यानेति तत्र यतनामेव कुर्यादिति भावः। क सति, आरम्भेऽपि कृष्यादिकर्मण्यपि प्रवर्तमानः। कथं, सदा नित्यं। हि यस्मात् भवति। कोऽसौ, धीवरो मात्स्यिकः। किंविशिष्टः, अघः पापः उत्कृष्टपातकी। किं कुर्वन्नपि, बहून्मत्स्यान् हनिष्यामीत्यभिध्यानेन प्रवृत्तोऽमारयन्नपि। कस्मात्, कर्षकात् कर्षणप्रवृत्तात्। किं कुर्वतो, घ्नतोऽपि देवब्राह्मणकुटुम्बार्थं धान्यमुत्पादयिष्यामीति अभिध्यानविशेषेण प्रवृत्ताद्बहूनपि मारयतः ॥ ८२ ॥

एवंविधेयतया व्यवस्थाप्यमानां हिंस्रादिप्राणिनां वधं प्रतिविधातुमाह—

हिंस्रदुःखिसुखिप्राणि-घातं कुर्यान्न जातुचित्।
अतिप्रसङ्गश्वभ्रार्ति-सुखोच्छेदसमीक्षणात् ॥ ८३ ॥

टीका—न कुर्यात् श्रेयोऽर्थी। कं, हिंस्रदुःखिसुखिप्राणिघातं। कथं, जातुचित् कदाचिदपि। कुतः, अतीत्यादि—हिंस्रा व्याघ्रादयः। अत्र केचिदाहुः, हिंस्रजीवा हन्तव्याः। हिंस्रे ह्येकस्मिन्हते भूयसां रक्षा कृता भवति। ततश्च धर्माधिगमः पापोपरमश्च स्यात्। तदयुक्तमतिप्रसङ्गात्। सर्वेषां प्राणिनां हिंस्रतया हन्तव्यतानुषङ्गात्। तथा च लाभमिच्छता तथाऽऽदिमा मूलोच्छेदः स्यात्। न च बहुरक्षणाभिप्रायेणापि हिंस्रहिंसनो धर्मः पापोच्छेदो वा युज्येत। दयामूलत्वात्तयोः। ये च संसारमोचकाः प्रचक्षते दुःखिनो जीवा हन्तव्यास्तेषां विनाशे दुःखविनाशसम्भवादिति, तदप्ययुक्तं। तेषां स्वल्पदुःखानां निहतानां नरकेऽनन्तदुःखैः संयोजनाया दुर्निवारत्वात्। अन्ये त्वाहुः—सुखिनो हन्तव्याः यतः संसारे सुखं दुर्लभं। सुखिनश्च हताः सुखिन एव भवन्तीति तदप्यसङ्गतं। सुखिनां हन्यमानानां दुःखावेशेन सुखोच्छेदस्यावश्यम्भावात्। दुःखमृत्युना च दुर्ध्यानानुसन्धानाद्दुरन्तदुर्गतिदुःखावर्तनिवर्तनात्। तदलमतिप्रसङ्गेन। स्वगता परगता वा यथाकथञ्चित्क्रियमाणा हिंसा न धर्माय स्यात्। किं तर्हि, पातकसम्भवायैवेति प्रतिपद्यमानैर्यथाशक्ति तत्परित्यागे धर्मार्थिभिः सततं यतितव्यमिति आप्तसूक्तोपनिषत् ॥ ८३ ॥

अथ पाक्षिकस्य दर्शनशुद्ध्यर्था लोकानुवृत्त्यर्थाश्च क्रिया कृत्स्नतयोपदिशति—

स्थूललक्षः क्रियास्तीर्थ-यात्राद्या दृग्विशुद्धये ।
कुर्यात्तथेष्टभोज्याद्याः प्रीत्या लोकानुवृत्तये ॥ ८४ ॥

टीका—कुर्यात् । कोऽसौ, स्थूललक्षः स्थूलं व्यवहारं लक्षयत्यालोचयतीति स्थूललक्षो व्यवहारप्रधानो बहुप्रदश्च गृही। का, क्रियाः । किंविशिष्टाः, तीर्थयात्राद्याः तीर्थान्यूर्जयन्तादीनि पुण्यपुरुषाध्युषितस्थानानि तेषु यात्रा गमनं, आद्यशब्देन रथयात्राक्षपकयात्रासिद्धिकामगमनादयः, तीर्थयात्रा आद्या यासु ताः । किमर्थं, दृग्विशुद्धये सम्यक्त्वनिर्मलीकरणार्थं । तथा स्थूललक्षः क्रियाः कुर्यात् । किंविशिष्टाः, इष्टभोज्याद्याः इष्टाः सधर्माणः स्वजना मित्रादयो भोज्यन्ते स्वगृहे भोजनं कार्यन्ते यस्यां सा इष्टभोज्या क्रिया, सा आद्या आसु अतिथिपूजनमृतवस्त्रादिक्रियासु ताः । कया, प्रीत्या हर्षेण नोद्वेगेन । किमर्थं, लोकानुवृत्तये लोकचिन्तावर्जनार्थम् ॥ ८४ ॥

श्रेयोऽर्थिना कीर्तेरर्जनीयत्वमाह—

अकीर्त्या तप्यते चेतश्चेतस्तापोऽशुभास्रवः ।
तत्तत्प्रसादाय सदा श्रेयसे कीर्तिमर्जयेत् ॥८५॥

टीका—तप्यते संक्लिश्यते । किं तत्, चेतश्चित्तं । कया, अकीर्त्या अयशसा । भवति च । कोऽसौ, चेतस्तापो मनःकालुष्यं । किंविशिष्टो,ऽशुभास्रवः पापहेतुः । यत एवं ततस्तस्मात्कारणात् । अर्जयेत् उपार्जयेत् । गृही । कां, कीर्तिं । कथं, सदा । कस्मै, तत्प्रसादाय चेतःप्रसत्त्यर्थम् । कस्मै तत्प्रसादः, श्रेयसे । अथवा श्रेयसे। पुण्यकारणाय तत्प्रसादायेति व्याख्येयम् ॥८५॥

कीर्त्युपार्जनोपायमाह—

परासाधारणान्गुण्य-प्रगण्यानघमर्षणान् ।
गुणान् विस्तारयेन्नित्यं कीर्तिविस्तारणोद्यतः ॥ ८६ ॥

टीका—विस्तारयेद्विपुलीकुर्यात् । कोऽसौ, कीर्तिविस्तारणोद्यतो यशःप्रसारणतत्परः । कान्, गुणान् दानमत्यशौचशीलादीन् । किंविशिष्टान्, परासाधारणान् अनन्यसदृशान् । पुनः किंविशिष्टान्, गुण्यप्रगण्यान् गुणवद्भिः प्रकर्षेण माननीयान् । पुनरपि किंविशिष्टान्, अघमर्षणान् पापविध्वंसिनः ॥ ८६ ॥

एवंविधाचारपरस्य श्रावकस्योत्तरोत्तरभूमिकाश्रयणेन सकलविरतिप्रासादारोहणविधिमुपदिशति—

सैषः प्राथमकल्पिको जिनवचोऽभ्यासामृतेनासकृ-
न्निर्वेदद्रुममावपन् शमरसोद्गारोद्धुरं बिभ्रति ।
पाकं कालिकमुत्तरोत्तरमहान्त्येतस्य चर्याफला-
न्यास्वाद्योद्यतशक्तिरुद्धचरितप्रासादमारोहतु ॥ ८७ ॥

टीका—आरोहतु चटतु। कोऽसौ, सैषः स एवैषः। एषः पूर्वग्रन्थेन निर्णीतः। कोऽसौ, प्राथमकल्पिकः प्रारब्धदेशसंयमः। कमारोहतु, उद्धचरितप्रासादं महाव्रतलक्षणयतिधर्मसौधं। किंविशिष्टः सन्, उद्यतशक्तिरुद्भूतसामर्थ्यः। किं कृत्वा, आस्वाद्यानुभूय। कानि, चर्याफलानि दर्शनिकादिप्रतिमाफलानि। कस्य, एतस्य निर्वेदद्रुमस्य। किंविशिष्टानि, उत्तरोत्तरमहान्ति यथोत्तरं पृथूनि। किं कुर्वन्ति, बिभ्रति धारयन्ति। किं, पाकं परमरसपरिणतिं परिपाकं च। किंविशिष्टं, कालिकं कालकृतं। पुनः किंविशिष्टं, शमरसोद्गारोद्धुरं शमः प्रशमसुखं स एव रसो रसनेन्द्रियग्राह्यो गुणस्तस्योद्गारोऽभिव्यक्तिस्तेनोद्धुरमुत्कटं स एव वा उद्धुरो यत्र। किं कुर्वन्, आवपन् सिञ्चन् पोषयन्। कं, निर्वेदद्रुमं संसारशरीरभोगवैराग्यवृक्षं। केन, जिनवचोऽभ्यासामृतेन जिनागमभावनापीयूषेण। कथम्, असकृदभीक्ष्णमिति भद्रम् ॥ ८७ ॥

इत्याशाधरविरचितायां स्वोपज्ञधर्मामृतसागारधर्मदीपिकायां
भव्यकुमुदचन्द्रिकासंज्ञायामादित एकादशः
प्रक्रमाश्च द्वितीयोऽध्यायः समाप्तः ॥२॥



# तृतीयोऽध्यायः ।

नैष्ठिकलक्षणमाह—

देशयमघ्नकषायक्षयोपशमतारतम्यवशतः स्यात् ।
दर्शनिकाद्येकादशदशावशो नैष्ठिकः सुलेश्यतरः ॥ १ ॥

टीका–स्याद्भवेत् । कोऽसौ, नैष्ठिकः श्रावकः । किंविशिष्टो, दर्शनिकाद्येकादशदशावशः, दर्शनं निर्मलमद्यादिविरत्याहितातिशयं सम्यक्त्वमस्यास्तीति 'अतिशायने ठश्च' इति ठः । एवं व्रतिकादिष्वप्यो व्युत्पाद्याः । दर्शनिक आदिर्येषां व्रतिकादीनां ता दर्शनिकाद्य एकादशदशाः श्रावकसंयमस्थानानि, तासां वशः पारतंत्र्यं यस्य स वर्तमानदेशसंयम इत्यर्थः । कस्मात्, देशेत्यादि–देशयमघ्ना अप्रत्याख्यानावरणाख्याः कषायाः क्रोधादयस्तेषां क्षयेणोदयाभावेन प्रत्याख्यानावरणकषायोदयविशिष्टेन युक्त उपशमः सदवस्था तत्क्षयोपशमस्तस्य तारतम्यं यथोत्तरमुत्कर्षस्तद्वशतस्तत्पारतम्यात् । पुनः किंविशिष्टः स्यात्, सुलेश्यतरः । लिम्पति स्वीकरोति पुण्यपापे स्वयं जीवो यया सा लेश्या, अथवा लिम्पत्यात्मीकरोत्यात्मानमिति लेश्या कषायोदय-

---

१ लिम्पत्यात्मीकरोत्यात्मा पुण्यपापे यया स्वयम् ।
सा लेश्येत्युच्यते सद्भिर्द्विविधा द्रव्यभावतः ॥
प्रवृत्तिर्योगिकी लेश्या कषायोदयरञ्जिता ।
भावतो द्रव्यतो देहच्छविः षोढोभयी मता ॥
कृष्णा नीलाऽथ कापोती पीता पद्मा सिता स्मृता ।
लेश्या षड्भिः सदा ताभिर्गृह्यते कर्म जन्मिभिः ॥
योगाविरतिमिथ्यात्वकषायजनितोऽङ्गिनाम् ।
संस्कारो भावलेश्याऽस्ति कल्माषास्रवकारणम् ॥
कापोती कथिता तीव्रो नीला तीव्रतरो जिनैः ।
कृष्णा तीव्रतमो लेश्या परिणामः शरीरिणाम् ॥
पीता निवेदिता मन्दः पद्मा मन्दतरो बुधैः ।
शुक्ला मन्दतमस्तासां वृद्धिः षट्स्थानयायिनी ॥

रञ्जिता योगप्रवृत्ति सैषा भावत , द्रव्यतस्तु शरीरच्छविर्लेश्या । सा च द्विविधाऽपि कृष्णादिभेदेन षोढा, कृष्णा नीला कापोती पीता पद्मा शुक्ला

निर्मूलस्कन्धयोश्छेदे भावा शाखोपशाखयोः ।
उच्चये पतितादाने भावलेश्या फलार्थिनाम् ॥
षट्पद चतुर्षु विज्ञेयास्तिस्रस्तिस्र शुभास्त्रिषु ।
शुक्ला गुणेषु षट्स्वेका लेश्या निर्लेश्यमन्तिमम् ॥
रागद्वेषमहाविष्टो दुर्मोहो दुष्टमानस ।
क्रोधमानादिभिस्तीव्रैर्ग्रस्तोऽनन्तानुबन्धिभि ॥
निर्दयो निरनुक्रोशो मद्यमांसादिलम्पट ।
सर्वदा कदनासक्त कृष्णलेश्यान्वितो जन ॥
क्रोधी मानी मायी लोभी । रागी द्वेषी मोही शोकी ।
हिंस्र क्रूरश्चण्डश्चौरो । मूर्खः स्तब्धः स्पर्धाकारी ॥
निद्रालु कामुको मन्द कृत्याकृत्याविचारक ।
महामूर्छो महारम्भो नीललेश्यो निगद्यते ॥
शोकभीमत्सरासूयापरनिन्दापरायण ।
प्रशंसति सदाऽऽत्मान स्तूयमान. प्रहृष्यति ॥
वृद्धिहानी न जानाति न मूढ स्वपरान्तरम् ।
अहङ्कारग्रहग्रस्त समस्तां कुरुते क्रियाम् ॥
श्लाघितो नितरां दत्ते रणे मर्तुमपीहते ।
परकीययशोध्वंसी युक्त कापोतलेश्यया ॥
समदृष्टिरविद्वेषो हिताहितविवेचक ।
वदान्य सदयो दक्ष पीतलेश्यो महामना ॥
शुचिर्दानरतो भद्रो विनीतात्मा प्रियंवद ।
साधुपूजोद्यत साधु पद्मलेश्यो नयक्रिय ॥
निर्निदानोऽनहङ्कार पक्षपातोज्झितोऽशठ ।
रागद्वेषपराचीन शुक्ललेश्य स्थिराशय ॥
तेज पद्मा तथा शुक्ला लेश्यास्तिस्र प्रशस्तिकाः
संवेगमुत्तमं प्राप्त क्रमेण प्रतिपद्यते ॥

चति । प्रशस्ता लेश्या यस्यासौ सुलेश्य प्रकृष्ट पाक्षिकापेक्षया सुलेश्य । सुलेश्यतर अथवा सर्वेऽपि यथोत्तर विशुद्धतरलेश्या स्यु ॥ १ ॥

दर्शनिकादीनुद्दिश्य तेषा गृहित्वब्रह्मचारित्वभिक्षुकत्वानि जघन्यमध्यमोत्तमत्वाघ विभक्तुमार्याद्वयमाह—

दर्शनिकोऽथ व्रतिकः सामयिकी प्रोपधोपवासी च ।
सचित्तदिवामैथुन-विरतौ गृहिणोऽणुयमिषु हीनाः षट्॥२॥
अब्रह्मारम्भपरि-ग्रहविरता वर्णिनस्त्रयो मध्याः ।
अनुमतिविरतोद्दिष्टवि रतावुभौ भिक्षुकौ प्रकृष्टौ च॥३॥

युग्म ।

टीका—अथशब्दोऽत्रानन्तर्यार्थे प्रत्येक योज्य । भवन्ति । के, श्रावका । कति, षट् । किंविशिष्टा भवन्ति, हीना जघन्या । केषु मध्ये, अणुयमिषु । श्रावकेषु न केवल हीना गृहिणश्च । क क, दर्शनिकोऽथानन्तर व्रतिकस्तत सामयिकी तदनु प्रोषधोपवासी तदनन्तर सचित्तविरतोऽपि दिवा मैथुनविरतश्च । भवन्ति । के ते, त्रय । किंविशिष्टा, मध्या अणुयमिषु मध्ये मध्यमा । पुन किंविशिष्टा, वर्णिनो ब्रह्मचारिण । कति त्रय । किमाख्या, अब्रह्मारम्भपरिग्रहविरता अब्रह्मविरत, आरम्भविरत परिग्रहविरतश्च । तदनन्तर भवत । कौ, उभौ । किंविशिष्टौ, प्रकृष्टौ अणुयमिषु मध्ये उत्कृष्टौ । पुन किंविशिष्टौ, भिक्षुकौ । अस्त्य भिक्षा यत्यपेक्षया ययोस्तौ । किमाख्यौ, अनुमतिविरतोद्दिष्टविरतौ ॥ २।३ ॥

नैष्ठिकोऽपि यादृश सन् पाक्षिकव्यपदेशमेव लभते तादृश दर्शयति—

दुर्लेश्याभिभवाज्जातु विषये क्वचिदुत्सुकः ।
स्खलन्नपि क्वापि गुणे पाक्षिकः स्यान्न नैष्ठिकः ॥ ४ ॥

---

१ षडत्र गृहिणो ज्ञेयास्त्रय स्युर्ब्रह्मचारिण ।
भिक्षुकौ द्वौ तु निर्दिष्टौ तत स्यात्सर्वतो यति ॥
आद्यास्तु षड् जघन्या स्युर्मध्यमास्तदनु त्रय ।
शेषौ द्वावुत्तमावुक्तौ जैनेषु जिनशासने ॥

टीका– स्याद्भवेत् गृही । किंविशिष्ट, पाक्षिको न नैष्ठिक । किंविशिष्ट सन्, उत्सुक सोत्कण्ठाभिलाष । क, विषये इन्द्रियार्थ । किंविशिष्टे, क्वचित् कामिन्यादीनामन्यतमे न सर्वत्र । कदा, जातु कदाचिन्न सर्वदा । कस्मात्, दुर्लेश्याभिभवात् दुर्लेश्यया कृष्णनीलकापोतीनाम-न्यतमया अभिभव कुत श्चिन्निमित्ताचेतनशक्तेस्तादृक्संस्कारोद्बोधस्तस्माद्धेतो न वाऽऽधिस्य । केवल तथा भवन् । स्खलन्नपि अतिचार गच्छन्न अनभ्यस्तपूर्वत्वात्संयमस्य दुर्धरत्वाद्वा सतम । क, गुणे । किंविशिष्टे, क्वापि मद्यविरत्यादीनामन्यतमे न सर्वत्र ॥ ४ ॥

दर्शनिकादीनामप्यस्वस्वानुष्ठानशक्त्यानुद्रूयत एव दर्शनिकादिव्यपदेश स्याद्भावतस्तु पूर्वपूर्वोऽभावेति बोधयन्नाह—

तद्वद्दर्शनिकादिश्च स्थैर्यं स्वे स्वे व्रतेऽव्रजन् ।
लभते पूर्वमेवार्थाद्व्यपदेशं न तूत्तरम् ॥ ५ ॥

टीका लभते । कोऽसौ, दर्शनिकादिश्च दर्शनिकव्रतिकादिरपि श्रावकविकल्प । क, व्यपदेश सञ्ज्ञा । किंविशिष्ट,पूर्वमेव प्राक्तनमेव । न तु न पुन । उत्तर परापेक्षया पर । कस्मात्, अर्थात् परमार्थतो व्यवहारादुत्तरमपि लभते । किंवत्, तद्वत् नैष्ठिकमात्रवत् । किं कुर्वन्, अव्रजन् अगच्छन् । किं तत्, स्थैर्यं स्थिरत्व क्वचित्कदाचित्कथंचिदचलनम् । क, स्वे स्वे व्रते निरतिचाराष्टमूल गुणादिलक्षणे ॥ ५ ॥

एतदेव समर्थयितुमाह—

प्रारब्धो घटमानो निष्पन्नश्चार्हतस्य देशयमः ।
योग इव भवति यस्य त्रिधा स योगीव देशयमी ॥६॥

टीका–भवति । कोऽसौ, स देशयमी श्रावक । कतिधा, त्रिधा त्रिप्रकार । क इव, योगिव यथा प्रारब्धयोगो घटमानयोगो निष्पन्नयोगश्चेति नैगमादिनयापेक्षया त्रिविधो योगी तथा प्रारब्धदेशसंयमो घटमानदेशसंयमो निष्पन्नदेशसंयमश्चेति त्रिविध श्रावकोऽपि स्यादित्यर्थ । यस्य किं, यस्यार्हतस्य जिनैकशरणस्य मतो भवति । कोऽसौ, देशयमो देशसंयम । किंविशिष्ट, प्रारब्ध उपक्रान्त, तथा घटमान सम्पद्यमान, तथा निष्पन्न पर्यन्त प्राप्त, क इव, योग इव समाधिर्यथा ॥ ६ ॥

एव स्थलशुद्धि विधायाधुना दर्शनिकस्वरूपनिरूपणार्थं श्लोकद्वयमाह—

पाक्षिकाचारसंस्कार दृढीकृतविशुद्धदृक् ।
भवाङ्गबोधानिर्विण्णः परमेष्टिपदैकधीः ॥ ७ ॥
निर्मूलयन्मलान्मूल गुणेष्वग्रगुणोत्सुकः ।
न्याय्यां वृत्तिं तनुस्थित्यै तन्वन्दर्शनिको मतः ॥ ८ ॥
युग्म ।

टीका—मत एवम्भूतनयादिष्ट सूरिभि । एतेन नैगमनयादेशात्पाक्षिकस्यापि दर्शनिकत्वमनुज्ञात भवति । ततो न ' श्रावकपदानि देवैरेकादश देशितानी त्यनेन विरोध , पाक्षिकस्य नैगमतो दर्शनिकत्वात् । कोऽसौ, मत दर्शनिक । किलक्षण , पाक्षिकाचारस्य पूर्वाध्याये प्रपञ्चेनोक्तस्य सस्कार उत्कर्षस्तेन दृढीकृता निश्चलत्व नीता विशुद्धा निर्दोषा दृक् दर्शन येन स पाक्षिकाचारसस्कारदृढीकृतविशुद्धदृक तथा भवाङ्गभोगनिर्विण्ण भवाङ्ग भोगा ससारशरीरइष्टविषया अथवा भवाङ्ग ससारकारण यो भोगो गृद्धिपूर्वक कामिन्यादिविषयसेवन तस्मा निर्विण्णो विरक्त प्रत्याख्यानावरणाख्य चारित्रमोहकर्मविपाकवशात् कामिन्यादिविषयान् भजन्नपि तत्राहृतसेवाभिसैन्ध इत्यर्थ , तथा परमेष्टिपदैकधी परमेष्ठिपदेषु अर्हदादिपञ्चगुरुचरणेषु एका धीरन्तर्दृष्टिर्यस्य स तथोक्त । आपदाक्रान्तोऽपि दर्शनिकस्तन्निवृत्त्यर्थं शासनदेवतादीन् कदाचिदपि न भजते । पाक्षिकस्तु भजत्यपीत्येवमर्थमेकग्रहणम् । तथा निर्मूलयन् मूलादपिनिरस्यन् । कान्, मलान् अतिचारान् । केषु मूलगुणेषु तथा अग्रगुणोत्सुक अग्रगुणे प्रतिमापदे उत्सुकोऽनुष्ठानमुत्कण्ठित । तथा तन्वन्ननुतिष्ठन् । का, वृत्ति कृष्यादिवार्तां । किंविशिष्टां न्याय्यां

१ आदावेत स्फुटमिह गुणा निर्मला धारणीया
पापध्वसि व्रतनपमल कुर्वता श्रावकीयम् ।
कर्तुं शक्य स्थिरगुरुभर मन्दिर गर्तपूर
न स्थेयोभिर्नहितममृते निर्मित ग्रावजालै ॥

२ न्याय वर्णिभ्यां गोरक्ष्यमुपार्यर्गुणिन नृपम् ।
लोकद्वयाविरुद्धां च धनार्थी संश्रयेत् क्रियाम् ॥

स्ववर्णकुलव्रतानुरूपः । किमर्थं मनःस्थित्यै शरीरवर्तनार्थं न विषयोपसेवनार्थं एवंविधलक्षणो दर्शनिको नाम श्रावको मन्यते ॥ ७।८ ॥

अथ मद्यादिव्रतद्योतनार्थं तद्विक्रयादिप्रतिषेधार्थमाह—

मद्यादिविक्रयादीनि नार्यः कुर्यान्न कारयेत् ।
न चानुमन्येत मनो वाक्कायैस्तद्व्रतद्युते ॥ ९ ॥

टीका—न कुर्यात् । कोऽसौ, आर्यो दर्शनिक । कानि, मद्यादिविक्रयादीनि मद्यादीनां मद्यमांसमधुनवनीतप्रभृतीनां विक्रयादीनि आदिशब्दात्सन्धानकमस्कारोपदेशाद्युपादानं । तथा न कारयेत् । न चानुमन्येत नाप्यनुमतिं दद्यात् । कै, मनोवाक्कायैः मनसा वाचा कायेन च । किमर्थं, तद्व्रतद्युते मद्यविरत्याद्यष्टमूलगुणनिर्मलीकरणार्थम् ॥ ९ ॥

यच्छीलनान्मद्यादिव्रतक्षतिः स्यात्तदुपदेशार्थमाह—

भजन्मद्यादिभाजस्त्रीः तादृशैःसह संसृजन् ।
भुक्त्याऽऽदौ चैति साकीर्तिं मद्यादिविरतिक्षतिम् ॥ १० ॥

*टीका—एति गच्छति । कोऽसौ, व्रती पुमान् । कां मद्यादिविरतिक्षतिम्* अष्टमूलगुणहानिं । किंविशिष्टां, साकीर्तिं वाच्यतासहिता । किं कुर्वन्, भजन् सेवमान । का स्त्री । किंविशिष्टा मद्यादिभाजो मद्यमांसादिसेविनी । न केवलं ता भजन् ससृजंश्च सम्पर्कं कुर्वन् । कैः सह तादृशैर्मद्यादिभाग्भि पुम्भि । क भुक्त्यादौ भोजनभाजनासनादौ ॥ १० ॥

एवं सामान्यतो मूलव्रतातिचारनिवृत्तिमभिधाय मद्याद्विव्रतातिचारनिवृत्त्यर्थमाह—

सन्धानकं त्यजेत्सर्वं दधि तक्रं द्व्यहोषितम् ।
काञ्जिकं पुष्पितमपि मद्यव्रतमलोऽन्यथा ॥ ११ ॥

टीका—त्यजेत् । कोऽसौ, दर्शनिक । किं सत्, सधानक । किंविशिष्ट, सर्वं । एतेन काञ्जिकवटकादेरपि हेयत्वं दर्शयति । उक्तं च—

१ मद्यादिरतादिगेहेषु पानमन्नं च नाचरेत् ।
तदामत्रादिसम्पर्कं न कुर्वीत कदाचन ॥

एवं स्थलशुद्धिं विधायाधुना दर्शनिकस्वरूपनिरूपणार्थं श्लोकद्वयमाह—

पाक्षिकाचारसंस्कार दृढीकृतविशुद्धदृक् ।
भवाङ्गभोगनिर्विण्णः परमेष्ठिपदैकधीः ॥ ७ ॥
निर्मूलयन्मलान्मूल गुणेष्वग्रगुणोत्सुकः ।
न्याय्यां वृत्तिं तनुस्थित्यै तन्वन्दर्शनिको मतः ॥ ८ ॥

युग्म ।

टीका—मत एवम्भूतनयादिष्ट सूरिभि । एतेन नैगमनयादेशात्पाक्षिकस्यापि दर्शनिकत्वमनुज्ञात भवति । ततो न "श्रावकपदानि देवैरेकादश देशितानी"त्यनेन विरोध, पाक्षिकस्य द्रव्यतो दर्शनिकत्वात् । कोऽसौ, मत दर्शनिक । किलक्षण, पाक्षिकाचारस्य पूर्वाध्याये प्रपञ्चेनोक्तस्य संस्कार उत्कर्षस्तेन दृढीकृता निश्चलत्व नीता विशुद्धा निर्दोषा दृक् दर्शन येन स पाक्षिकाचारसंस्कारदृढीकृतविशुद्धदृक् तथा भवाङ्गभोगनिर्विण्ण भवाङ्ग भोगा संसारशरीरेष्टविषया अथवा भवाङ्ग संसारकारण यो भोगो गृद्धिपूर्वक कामिन्यादिविषयसेवन तस्मा निर्विण्णो विरक्त प्रत्याख्यानावरणाख्य चारित्रमोहकर्मविपाकवशात् कामिन्यादिविषयान् भजन्नपि तत्राकृतमेवानिबन्ध इत्यर्थ, तथा परमेष्ठिपदैकधी परमेष्ठिपदेषु अर्हदादिपञ्चगुरुचरणेषु एका धीरन्तर्दृष्टिर्यस्य स तथोक्त । आपदाकुलितोऽपि दर्शनिकस्तन्निवृत्त्यर्थं शासनदेवतादीन् कदाचिदपि न भजते । पाक्षिकस्तु भजत्यपीत्येवमर्थमेकग्रहणम् । तथा निर्मूलयन् मूलादपि निरस्यन् । कान्, मलान् अतिचारान् । केषु मूलगुणेषु तथा अग्रगुणोत्सुक अग्रगुणे प्रतिकपदे उत्सुकोऽनुष्ठातुमुत्कण्ठित । तथा तन्वन्ननुतिष्ठन् । का, वृत्ति कृष्यादिवार्ता । किंविशिष्टां, न्याय्यां

---

१ आदावेते स्फुटमिह गुणा निर्मला धारणीया
पापध्वंसि व्रतनपमल कुर्वता श्रावकीयम् ।
कर्तुं शक्य स्थिरगुरुभर मन्दिर गर्तपूरं
न स्थेयोभिर्दृढतममृते निर्मित ग्रावजालैः ॥

२ कृषिं वणिज्यां गोरक्ष्यमुपायैर्गुणिनं नृपम् ।
लोकद्वयाविरुद्धां च धनार्थी संश्रयेत् क्रियाम् ॥

स्ववर्णकुलमतानुरूपां । किमर्थं तनुस्थित्यै शरीरवर्तनार्थं न विषयोपसेवनार्थं एवंविधलक्षणो दर्शनिको नाम श्रावको मन्यते ॥ ७।८ ॥

अथ मद्यादिव्रतद्योतनार्थं तद्विक्रयादिप्रतिषेधार्थमाह—

मद्यादिविक्रयादीनि नार्यः कुर्यान्न कारयेत् ।
न चानुमन्येत मनो-वाक्कायैस्तद्व्रतद्युते ॥ ९ ॥

टीका—न कुर्यात् । कोऽसौ, आर्यो दर्शनिकः । कानि, मद्यादिविक्रया दीनि मद्यादीनां मद्यमांसमधुनवनीतप्रभृतीनां विक्रयादीनि आदिशब्दात्सन्धानकमस्कारोपदेशाद्युपादान । तथा न कारयेत् । न चानुमन्येत नाप्यनुमतिं दद्यात् । कैः, मनोवाक्कायैः मनसा वाचा कायेन च । किमर्थं, तद्व्रतद्युत्यै मद्यविरत्याद्यष्टमूलगुणनिर्मलीकरणार्थम् ॥ ९ ॥

यच्छीलनान्मद्यादिव्रतक्षतिः स्यात्तदुपदेशार्थमाह—

भजन्मद्यादिभाजस्त्रीः स्तादृशैः सह संसृजन् ।
भुक्त्याऽऽदौ चैति साकीर्तिं मद्यादिविरतिक्षतिम् ॥ १० ॥

टीका—एति गच्छति । कोऽसौ, व्रती पुमान् । कां मद्यादिविरतिक्षतिम् अष्टमूलगुणहानिं । किंविशिष्टां, साकीर्तिं वाच्यतासहितां । किं कुर्वन्, भजन् सेवमानः । काः स्त्रीः । किंविशिष्टाः, मद्यादिभाजः मद्यमांसादिसेविनीः । न केवलं ता भजन् संसृजंश्च संसर्गं कुर्वन् । कैः सह तादृशैर्मद्यादिभाग्भिः पुम्भिः । क, भुक्त्यादौ भोजनभाजनासनादौ ॥ १० ॥

एवं सामान्यतो मूलव्रतातिचारनिवृत्तिमभिधाय मद्यादिव्रतातिचारनिवृत्त्यर्थमाह—

सन्धानकं त्यजेत्सर्वं दधि तक्रं द्व्यहोषितम् ।
काञ्जिकं पुष्पितमपि मद्यव्रतमलोऽन्यथा ॥ ११ ॥

टीका—त्यजेत् । कोऽसौ, दर्शनिकः । किं तत्, सन्धानकं । किंविशिष्टं, सर्वं । एतेन काञ्जिकवटकादेरपि हेयत्वं दर्शयति । उक्तं च—

1 मद्यादिस्वादिगेहेषु पानमन्नं च नाचरेत् ।
तदामत्रादिसम्पर्कं न कुर्वीत कदाचन ॥

जायन्तेऽनन्तशो यत्र प्राणिनो रसकायिकाः ।
सन्धानानि न वर्ज्यन्ते तानि सर्वाणि भक्षिका ॥

तथा त्यजेत् । किं तत्, दधिनवनीतं मथितं च । किंविशिष्टं, पुष्पितं व्यहोषितं अहोरात्रिद्वयमतिक्रान्तं । तथा त्यजेत् कांजिकं, धान्याम्लं, सपुष्पमिव जातं । अपिशब्दाद्‌द्व्यहोषितं च । अन्यथा उक्तविपर्यये । भवति । कोऽसौ, मद्यव्रतमलः मद्यविरत्यतिचारः ॥ ११ ॥

मांसविरत्यतीचारानाह—

**चर्मस्थमम्भः स्नेहश्च हिंग्वसंहृतचर्म च ।**
**सर्वं च भोज्यं व्यापन्नं दोषः स्यादामिषव्रते ॥ १२ ॥**

टीका—स्यात् भवेत् । किं तत्, चर्मस्थमम्भः प्रयुज्यमानं । किं स्यात्, दोषोऽतिचारः । क्व, आमिषव्रते मांसविरतौ प्रतिपन्नायां । किं किं नदित्याह—अम्भः जलं, स्नेहश्च घृतादिकं दोषः स्यात् । किंविशिष्टं, चर्मस्थं दृत्यादिस्थं जलं कुतुपादिस्थं च घृतादिकमुपयुज्यमानम् । एतेन स्वाद्विकायादिस्थब्ब टिकादिस्थघृतफलादीनां चर्मोपनद्धचाल्लनीशूर्पटिकाद्युपस्कृतकणिकादीनां च त्याज्यतामुपलक्षयति । तथा हिंगु रामठं दोषः स्यात् । किंविशिष्टम्, असहृतचर्म असहृतं स्वस्वभावेनापरिणामितं चर्म येन तत् 'असहृतचर्मे'ति वा पाठः । तत्र चर्मणा छादितं चर्मणि बद्धं प्रसारितं वा रामठं न गृह्णीयादिति भावः । उपलक्षणमेतत् । तेन तथाभूतं लवणाद्यपि । तथा भोज्यं भक्तघृतादि सर्वं । किंविशिष्टं, व्यापन्नं कुथितं स्वादचलितमिति यावत् ॥ १२ ॥

मधुव्रतातिचारनिवृत्त्यर्थमाह—

**प्रायः पुष्पाणि नाश्नीयान्मधुव्रतविशुद्धये ।**
**वस्त्यादिष्वपि मध्वादि-प्रयोगं नार्हति व्रती ॥ १३ ॥**

टीका—नाश्नीयात् न भक्षयेत् मधुविरतः । कानि, पुष्पाणि । किमर्थं, मधुव्रतविशुद्धये क्षौद्रविरत्यतिचारनिवृत्त्यर्थं । कथं, प्रायः । तेन मधूकभल्लातकपुष्पाणां शक्यशोधनत्वाद्भक्षणं नाश्नीयादिति निषेधः । शुष्कस्वाथागकेसरादीनामपीति लक्षयति । तथा नार्हति न कर्तुं योग्यो भवति । कोऽसौ, व्रती मधुमांसमद्येभ्यो निशयेन निवृत्तः । कं, मध्वादिप्रयोगं माक्षिकमांसमद्योपयोगं । केषु, वस्त्या-

दिषु वस्तिकर्मपिण्डप्रदाननेत्राभनसेचनलङ्घनाप्रासादिषु किं पुनः स्वास्थ्यानुवृत्तिवाजीकरणादिविधिष्वित्यपिशब्दार्थः ॥ १३ ॥

पञ्चोदुम्बरविरत्यतिचारपरिहारार्थमाह—

सर्वं फलमविज्ञातं वार्ताकादि त्वदारितम्
तद्वद्भल्लादिसिम्बीश्च खादेन्नोदुम्बरव्रती ॥ १४ ॥

टीका—न खादेन्न भक्षयेत् । कोऽसौ, उदुम्बरव्रती पिप्पलादिफलनिवृत्तः किं तत्, फलं सर्वं । किंविशिष्टम्, अविज्ञातमज्ञातनाम । तथा न खादेत् । किं तत्, वार्ताकादि । आदिशब्देन कर्करवदरपूगफलादि । किंविशिष्टम्, अदारितमभिन्नं अशोधितमध्यमित्यर्थः । तथा भल्लादिसिम्बी भल्लराजमाषप्रमुखफलिका न खादेत् । किंवत्, तद्वत् अदारिता इत्यर्थः ॥ १४ ॥

अनस्तमितभोजनातिचारमाह—

मुहूर्तेऽन्त्ये तथाऽऽद्येऽह्नो वल्भाऽनस्तमिताशिनः ।
गदच्छिदेऽप्याम्रघृताद्युपयोगश्च दुष्यति ॥ १५ ॥

टीका—दुष्यति दोषो भवति । काऽसौ, वल्भा भोजनं । क्व, मुहूर्ते घटिकाद्वये । कस्य अह्नो दिवसस्य । किंविशिष्टे, अन्त्ये पर्यन्तवर्तिनि । तथा आद्ये प्रथमे । कस्य, अनस्तमिताशिनः अनस्तमिते सूर्येऽश्नातीत्येवंव्रतस्य । तथा दुष्यति । कोऽसौ, आम्रघृताद्युपयोगः घृतचारचाचमोचादिफलानां घृतक्षीरेक्षुरसादीनां च सेवनं । कस्मै गदच्छिदे रोगनिवृत्त्यर्थं, किं पुनः स्वास्थ्यानुवृत्त्याद्यर्थमित्यपिशब्दार्थः ॥ १५ ॥

जलगालनव्रतातिचारनिवृत्त्यर्थमाह—

मुहूर्तयुग्मोर्ध्वमगालनं वा दुर्वाससा गालनमम्बुनो वा ।
अन्यत्र वा गालितशेषितस्य
न्यासो निपानेऽस्य न तद्व्रतेऽर्च्यः ॥ १६ ॥

टीका—अर्च्यं इति लिङ्गविपरिणामेन सम्बन्धः । न अर्च्यं निन्द्यमित्यर्थः । किं तत्, अगालनमश्रावणं । कस्य अम्बुनो जलस्य । कथं, मुहूर्तयुग्मोर्ध्वं घटिकाचतुष्टयादुपरि । क्व, तद्व्रते गालितजलपाननिष्ठायां । यावज्जलाम्बयोऽपि पर-

रूपरसमुच्चये । तथा नार्च्यं । किं तत्, अम्बुनो गालनं । केन, दुर्वाससा अल्पमच्छिद्रजर्जरादिवस्त्रेण । तथा नार्च्यं । कोऽसौ, न्यासः स्थापनं । कस्य, अम्बुनः । किंविशिष्टस्य, गालितशोषितस्य वस्त्रगालितादुद्धरितस्य । क्व, निपाने जलाशये । किंविशिष्टे, अन्यत्र स्वाधारजलाशयादन्यस्मिन् । अथ—

" पसुघरमहियाइ सत्तवि वसणाइ जो विवज्जेइ ।
सम्मत्तविसुद्धमई सो दंसणसावओ भणिओ ॥"

इति वसुनन्दिसैद्धान्तिमते ॥ १६ ॥

दर्शनिकस्य द्यूतादिव्यसननिवृत्तिमुपदेष्टुं तेषामिहामुत्र चापायावद्यप्रायत्वमुदाहरणद्वारेण व्याहरन्नाह—

द्यूताद्धर्मतुजो बकस्य पिशितान्मद्याद्यदूनां विप-
च्चारोः कामुकया शिवस्य चुरया यद्ब्रह्मदत्तस्य च ।
पापर्द्ध्या परदारतो दशमुखस्योच्चैरनुश्रूयते
द्यूतादिव्यसनानि घोरदुरितान्युज्झेत्तदार्यस्त्रिधा ॥१७॥

टीका–उज्झेत् त्यजेत् । कोऽसौ, आर्यः सद्धर्मा गृही । कथं, त्रिधा मनोवाक्कायकृतकारितानुमतैः । कानि, द्यूतादीनि व्यसनानि । द्यूतमांसमद्यवेश्याचौर्यपापर्द्धिपरदारोपसेवनानि । किंविशिष्टानि, घोरदुरितानि घोराणि दुर्गतिदुःखकारणानि दुरितानि पापानि येभ्यस्तानि । कथं, तत्तस्मात् । यद्यस्मादनुश्रूयते वृद्धपरम्परया आकर्ण्यते । का असौ, विपत् । कथम्भूता । उच्चैः प्रकृष्टा । कस्मात्, द्यूतात् द्यूतक्रीडनात् । कस्य, धर्मतुजो धर्मपुत्रस्य युधिष्ठिरस्य । तथोच्चैर्विपदनुश्रूयते । कस्य, बकस्य बकनाम्नो राज्ञः । कस्मात्, पिशितात् मांसभक्षणात् । तथोच्चैर्विपदनुश्रूयते । केषां, यदूनां यदुवंशोत्पन्नानां यादवानां । कस्मात्, मद्यात् मद्यपानात् । तथा उच्चैर्विपदनुश्रूयते । कस्य, चारोः चारुदत्तनाम्नः श्रेष्ठिनः । कया, कामुकया वेश्योपसेवनया । तथा उच्चैर्विपदनुश्रूयते । कया, चुरया चौरिकया । कस्य, शिवभूतिनाम्नो द्विजस्य । तथा उच्चैर्विपदनुश्रूयते । कस्य, ब्रह्मदत्तनाम्नोऽन्त्यचक्रवर्तिनः । कया, पापर्द्ध्या आखेटकेन । तथा उच्चैर्विपदनुश्रूयते । कस्य, दशमुखस्य रावणस्य । कुतः, परदारतः परस्त्रीगमनाभिलाषनिर्बन्धनः ॥ १७ ॥

व्यसनशब्दनिरुक्तिद्वारेण द्यूतादेर्घोरदुरितश्रेय प्रत्यावर्तनहेतुत्वं समर्थ्य नाद्विरतस्य तन्मधानफलत्वाद्धातुपानाद्युपव्यसनानामपि दूरपरिहरणीयतामु-पदिशति–

जाग्रत्तीव्रकषायकर्कशमनस्कारार्पितैर्दुष्कृतै-
श्चैतन्यं तिरयचमस्तरदपि द्यूतादि यच्छ्रेयसः ।
पुंसो व्यस्यति तद्विदो व्यसनमित्याख्यान्त्यतस्तद्व्रतः
कुर्वीतापि रसादिसिद्धिपरतां तत्सोदरीं दूरगाम्॥१८॥

टीका–आख्यान्ति व्यपदिशन्ति । के ते, विदो विद्वांस. । किं तत्, द्यूता-दिव्यसनं । किमाख्यान्ति, व्यसनं व्यसनमितिशब्देन व्यवहरन्तीत्यर्थः । कथं, तत् तस्मात् । यद्यस्मात्, व्यस्यति प्रत्यावर्तयति । किं तत्, द्यूतादि । कान्, पुंसः पुरुषान् । कस्मात्, श्रेयस कल्याणं प्रापयतीत्यर्थ । किं कुर्वत्,तिरयत् छादयत् । किं तत्, चैतन्यमन्तस्तत्त्वं । कैः, दुष्कृतैः पापैः । किंविशिष्टैः, जाग्रदित्यादि, जाग्रद्भिर्निरयोदितैस्तीव्रैर्दुर्निवारैः कषायैः क्रोधादिभि कर्कश-स्तब्धकर्मबन्धसम्पादनोद्यतो मनस्कारश्चित्तप्रणिधानं तेनार्पितैरात्मना संयोजितैः । किं कुर्वदपि, तरदपि अतिक्रामत् । किं तत्, तमो मिथ्यात्व । किं पुनर्मि-थ्यात्वे विवर्तमानमित्यपिशब्दार्थः । यत एवं तत एतस्मात् कारणात् कुर्वीत विदधीत । कोऽसौ, तद्व्रत द्यूतादिविरतिं प्रतिपन्न । कां रसादिसिद्धिपरता-मपि, न परं द्यूतादिपरतामित्यपिशब्दार्थः । किंविशिष्टां, दूरगां दूरवर्तिनीं । किंविशिष्टां, यतस्तत्सोदरीं द्यूतादिव्यसनसदृशीं, दुरन्तदुष्कृतबन्धश्रेय.प्रत्या-वर्तनहेतुत्वाविशेषात् । रसादीत्यादिशब्देनाञ्जनगुटिकापादुकाविवरप्रवेशादि गृह्यते ॥ १८ ॥

द्यूतनिवृत्त्यतिचारमाह—

दोषो होडाद्यपि मनो-विनोदार्थं पणोज्झिनः ।
हर्षामर्षोदयाङ्गत्वात् कषायो ह्यंहसेऽञ्जसा ॥ १९ ॥

टीका–भवति । किं तत्, होडादि । होडा परस्परस्पर्धया धावनादि आदिशब्देन द्यूतदर्शनादि । किं भवति, दोषोऽतिचार. । कस्य, पणोज्झिन

यण नतमुज्झतीत्येवव्रतस्य । किमर्थं मनोविनोदार्थमपि मनोऽपि रमयितु प्रयुज्यमाने दोष, किं पुनर्धनार्थं । कुतो,हर्षामर्षोदयाङ्गत्वात् प्रमोदक्रोधो त्पत्तिहेतुत्वात । पुनर्दपि समर्थयितुमाह–हि यस्मादवति । कोऽसौ, कषायो रागद्वेषपरिणाम । कस्मै, अहसे पापनिमित्त । कन अञ्जसा परमार्थेन ॥१९॥

वेश्याव्यसनव्रतातिचारनिवृत्त्यर्थमाह–

**त्यजेत्तौर्यत्रिकासक्तिं वृथाट्यां पिङ्गसङ्गतिम् ।**
**नित्यं पण्याङ्गनात्यागी तद्गेहगमनादि च ॥ २० ॥**

टीका–त्यजेत् । कोऽसौ, पण्याङ्गनात्यागी वेश्यानिवृत्तिव्रत । किं किं, तौर्यत्रिकासक्ति गीतनृत्यवाद्येषु सेवानिबन्ध । आसक्तिग्रहणादि्वत्यालयादौ धर्मार्थं गीतश्रवण न दोष इति लक्षयति । तथा वृथाट्या प्रयोजन विना विचरणां त्यजेत् । तथा पिङ्गसङ्गति विटै सह साङ्गत्य त्यजेत् । पिङ्ग इति पिट् ' पिट् ' अनादरे । सेटम पिट अनादर । सिटा अनादरेण गायति गच्छ ति वा । ' अन्यतोऽपि चेति ' ड पृषोदरादित्वात्सस्य च पत्व । तथा तद्गे हगमनादि वेश्यागृहगमनसम्भाषणसत्कारादि त्यजेत् नित्यमित्यनेन सर्वदा । अत्र व्रते य न कुयात दुर्निवारत्वादित्युपदिशति ॥ २० ॥

चौर्यव्यसनमलोपदेशार्थमाह–

**दायादाज्जीवतो राज वर्चसाद्गृह्णता धनम् ।**
**दायं वाऽपह्नुवानस्य क्वाचौर्यव्यसनं शुचि ॥ २१ ॥**

टीका–क, कस्मिन्देशे काले च । अचौर्यव्यसन चौरिकापरिहारव्रत ? शुचि निरतिचार भवति न क्वापीत्यर्थ । कस्य, पुस किं कुर्वतो, गृह्णत । स्वीकुर्वत । किं तत्, धन ग्रामसुवर्णादिद्रव्य । कस्मात्, दायादात् दाय कुल्साधारण द्रव्यमादत्ते इति दायादो आर्त्रादिस्तस्मात् । किं कुर्वतो, जीवन । मृतस्य तु यथा याय स्वीकुर्वतो नास्ति दोष । कस्माद्गृह्णतो, राज वर्चसात् नृपतेजस न जातिकुलदेशकालाद्यनुरोधात् । तथा अपह्नुवानस्य भ्रात्रादिभ्य अपलपत । क दायम् ॥ २१ ॥

पापर्द्धिविरत्यतीचारनिषेधार्थमाह–

वस्त्रनाणकपुस्तादि-न्यस्तजीवच्छिदादिकम् ।
न कुर्यात्त्यक्तपापर्द्धि स्तद्धि लोकेऽपि गर्हितम् ॥ २२ ॥

टीका–न कुर्यात् । कोऽसौ, त्यक्तपापर्द्धि । किं तत्, वस्त्रेत्यादि, वस्त्राणि पट्टरङ्गपटादीनि, नाणकानि सीतारामटङ्कादीनि, पुस्तादीनि च लेप्यचित्रकाष्ठाश्मदन्तधात्वादिशिल्पानि, वस्त्राणि च नाणकानि च पुस्तादीनि च वस्त्रनाणकपुस्तादीनि तेषु न्यस्तो नामोच्चारणपूर्वकं सोऽयमिति स्थापितो जीवः प्राणी गजतुरगादिस्तस्य छिदादिकं खण्डनात्वर्तनभञ्जनादि । हि यस्मात् भवति । किं तत्, वस्त्रादिन्यस्तजीवच्छिदादिकं । किंविशिष्ट, गर्हितं निन्दितं । क्व, लोकेऽपि व्यवहर्तृजनमध्येऽपि न परं शास्त्रे ॥ २२ ॥

परदारव्यसनदोषनिषेधार्थमाह—

कन्यादूषणगान्धर्व विवाहादि विवर्जयेत् ।
परस्त्रीव्यसनत्यागव्रतशुद्धिविधित्सया ॥ २३ ॥

टीका—विवर्जयेत् । कोऽसौ, परदारवर्जी । किं तत्, कन्येत्यादि । कन्यादूषणं कुमार्यां अभिगमनं स्वविवाहनार्थं दोषोद्भावनं वा, गान्धर्वविवाहो यो मातुः पितुर्बन्धूनां चाप्रामाण्यात्परस्परानुरागेण मिथः समवायाद्वधूवराभ्यां क्रियते, आदिशब्देन हरविवाहो हरणादि । कया, परस्य स्त्री परस्त्री तत्र तदेव वा व्यसनं तस्य त्यागः स एव व्रतं तस्य शुद्धिर्निर्दोषता तां विधित्सा कर्तुमिच्छा तया ॥ २३ ॥

मद्यमांसव्यसननिवृत्त्योरतीचाराः प्रागेवोक्ताः । इदानीं यतो लोकद्वयविरुद्धबुद्ध्या आत्मना विरतिः क्रियते परस्मिन्नपि तत्प्रयोगं तद्व्रतविशुद्ध्यर्थं न विदध्यादित्यनुशास्ति—

व्रत्यते यदिहामुत्रा-प्यपायावद्यकृत्स्वयम् ।
तत्परेऽपि प्रयोक्तव्यं नैव तद्व्रतशुद्धये ॥ २४ ॥

---

१ परदारसद्दियाइ सत्तइ वसणाइ जो विवज्जेइ ।
सम्मत्तविसुद्धमई सो दंसणसावयो भणियो ॥

टीका—प्रत्यते सकल्पपूर्वं प्रत्याख्यायते । किं तत्, यत् वस्तु । किंविशिष्टम्, अपायावद्यकृत् अपायोऽभ्युदयनि श्रेयसप्रध्वंसनोपाय, अवद्यं गर्ह्यं, अपायश्चावद्य चापायावद्ये ते करोति तत् । क, इहास्मिञ्जन्मनि । तथाऽमुत्र परजन्मनि । केन प्रत्यते, स्वयं आत्मना । किं तत् व्रतविपर्ययकृत् वस्तु । नैव प्रयोक्तव्य प्रयोज्य । क, परेऽपि आत्मनीव पुरुषान्तरेऽपि । कस्यै, व्रतशुद्धये प्रकृतव्रत-निर्मलीकरणार्थम् ॥ २४ ॥

एव प्रतिपन्नदर्शनप्रतिमस्य श्रावकस्य स्वप्रतिज्ञानिर्वाहार्थमुत्तरेण प्रबन्धेन शिक्षां प्रयच्छन्नाह—

अनारम्भवधं मुञ्चेच्चरेन्नारम्भमुध्दुरम् ।
स्वाचारप्रातिलोम्येन लोकाचारं प्रमाणयेत् ॥ २५ ॥

टीका—मुञ्चेत् त्यजेत् । दर्शनिक । कम्, अनारम्भवध तप सयमादि-साधनतनुस्थितयर्थं कृष्यादिनियाथा अन्यत्र प्राणिहिंसा । एतेन यदुक्त स्वामिसमन्तभद्रदेवै—'दर्शनिकस्तत्त्वपथगृह्य' इति दर्शनप्रतिमालक्षण तदपि सगृहीत तथाविधहिंसाविरतिविष्युपदेशेन पञ्चाणुव्रतानुसरणविधानोपदेशात् । तथा न चरेत् न कुर्यात । कम्, आरम्भ कृष्यादिक । किंविशिष्टम्, उध्दुरम् आत्मनिर्वाहभर । परेण हि कृष्यादिक्रिया कारयतो द्वन्द्वच्छदयवाज्ञ तादृशी प्रतिज्ञातधर्मकर्मानुष्ठाने गृहिणो विहस्तता भवति यादृशी तामात्मना कुर्वत सा स्यात द्वन्द्वावर्तनैवर्तनात् । तथा प्रमाणयेत् प्रमाण कुर्यात् न विसवाद-येदित्यर्थ । क, लोकाचार स्वामिसेवाक्रयविक्रयादिक । केन स्वाचारप्राति-लोम्येन आत्मप्रतिपन्नव्रतानुष्ठानानुपघातेन ॥ २५ ॥

धर्मे पत्न्या सुतरां व्युत्पादनाविधिमुपदिशति—

व्युत्पादयेत्तरां धर्मे पत्नीं प्रेम परं नयन् ।
सा हि मुग्धा विरुद्धा वा धर्माद् भ्रंशयते तराम् ॥ २६ ॥

टीका—व्युत्पादयेत् तरा । अर्थादिष्यु पायात् धर्मेऽतिशयेन व्युत्पन्नां कुर्यात् अथवा धर्मविषये सर्वमपि परिवार च पत्नीं च व्युत्पादयन् पत्नीं ततोऽतिश-येन तत्र व्युत्पादयेदिति व्याख्येय । कोऽसौ, दर्शनिक । का, पत्नीं भार्यां ।

ठ, धर्मे । किं कुर्वे,—अयन् प्रापयन् । का, पत्नी । किं तत्, प्रेम स्वस्मिन् धर्मे त्र स्नेह । किंविशिष्ट, परमुत्कृष्ट । हि यस्मात् अदायते तरा परिवारा (दा) दतिशयेन प्रच्यावयति । काऽसौ, सा पत्नी । क, पुरुष । कस्मात्, धर्मात् । किंविशिष्टा सती, मुग्धा धर्मे मूढा धर्ममजानतीत्यर्थ । तथा विरुद्धा पुंसि धर्मे वा द्वेपिणीत्यर्थ । इदमत्र तात्पर्य धर्ममजानानो विरक्तश्च परिजनो नर धर्मात्प्रच्यावयति । ततोऽप्यतिशयेन तादृग्विधा गृहिणी । तदधीनत्वाद्गृहिणो धर्मकार्याणाम् ॥ २६ ॥

प्रेम पर नयक्षित्यस्य समर्थनार्थमाह—

> स्त्रीणां पत्युरुपेक्षैव परं वैरस्य कारणम् ।
> तन्नोपेक्षेत जातु स्त्रीं वाञ्छन्लोकद्वये हितम् ॥ २७ ॥

टीका—भवति । किं तत्, वैरस्य कारण वैरस्य विरागताया हेतु । अथवा वैरस्य विरोधस्य कारण । किंविशिष्ट, परमुत्कृष्ट । कासा स्त्रीणा । किं तत्, उपेक्षैव अनादर एव, न तु वैरूप्यनिर्धनत्वादि । कस्य पत्युर्भर्तु । यत एव तत-स्मात् । नोपेक्षेत, नोपेक्षणीयत्वेन पश्येत् । कोऽसौ, पुमान् । का, स्त्री स्त्रिय कदा जातु कदाचिदपि धर्माद्यनुष्ठानकाले । किं कुर्वन्, वाञ्छन् अभिलपन् । किं तत्, हित सुख सुखकारण च । क, लोकद्वयेऽपि इहलोके परलोके च॥२७॥

कुलस्त्रियाऽपि धर्मादिकमिच्छन्त्या भर्तृच्छन्दानुवृत्तिरेव कर्तव्येति प्राम-ङ्क्ष्वी स्त्रिया शिक्षा प्रयच्छन्नाह—

> नित्यं भर्तृमनीभूय वर्तितव्यं कुलस्त्रिया ।
> धर्मश्रीशर्मकीर्त्येककेतनं हि पतिव्रताः ॥ २८ ॥

टीका—वर्तितव्य मनोवाक्कायकर्मभिराचरितव्य । कया, कुलस्त्रिया कुलीन-नार्या । किं कृत्वा, भर्तृमनीभूय अभर्तृमना भर्तृमना भूत्वा पतिचित्तानुव-र्तनेनैव चिन्त्य वाच्य चेष्टितव्य च । कथ, नित्य सर्वदा । हि यस्मात् । भवन्ति । का, पतिव्रता पतिसेवैव व्रत प्रतिज्ञा शुभकर्मप्रवृत्तिर्वा यासा ता इत्यर्थ । किं भवति, धर्मेत्यादि—धर्मस्य पुण्यस्य, श्रियो विभूतेर्भारत्याश्च, शर्मण

आनन्दस्य, कीर्तेर्यशस एकमुत्कृष्टमव्यभिचारि केतनं गृहं ध्वजो वा यास्ता धर्मश्रीशर्मकीर्त्येककेतनम्। निःय धर्मादिभ्यो धर्मादिविख्याता वा इत्यर्थः ॥२८॥

धर्मार्थिनः कुलस्त्रियामप्यत्यासक्ति निषेधयन्नाह—

भजेद्देहमनस्तापशमान्तं स्त्रियमन्नवत् ।
क्षीयन्ते खलु धर्मार्थकायास्तदतिसेवया ॥ २९ ॥

टीका–भजेत् सेवेत। कोऽसौ त्रैवर्णिकः विशेषणाद्दर्शनिकः श्रावकः। का, स्त्रियं। कथं, यथा भवति देहमनस्तापशमान्तं शरीरमनसो सन्तापोपशमो यथा भवति न पुनरत्यासक्त्या। किंवत्, अन्नवत् भोजनं यथा। खलु यस्मात्। क्षीयन्ते क्षयं यान्ति। के, धर्मार्थकायाः धर्मो, धनं शरीरं च त्रीण्यपि। कया, तदतिसेवया अन्नस्येव स्त्रिया अत्यासक्तिमात्रोपयोगेन ॥

पुत्रोत्पादनाद्रियत्नविधिमाह—

---

पुत्रोत्पादनविधिस्त्वयमष्टाङ्गहृदयोक्तः—

1 पूर्णषोडशवर्षा स्त्री पूर्णविंशेन सङ्गता।
शुद्धे गर्भाशये मार्गे रक्ते शुक्रेऽनिले हृदि ॥
वीर्यवन्तं सुतं सूते ततो न्यूनाब्दयोः पुनः।
रोग्यल्पायुरधन्यो वा गर्भो भवति नैव वा ॥
शुक्रं शुक्लं गुरु स्निग्धं मधुरं बहुलं बहु।
घृतमाक्षिकतैलाभं सद्गर्भायार्तवं पुनः ॥
लाक्षारसशशास्राभं धौतं यच्च विरज्यते।
शुद्धशुक्रार्तवं स्वस्थं संरक्तं मिथुनं मिथः ॥
स्नेहैः पुंसवनैः स्निग्धं शुद्धं शालितबस्तिकम्।
नरं विशेषात्क्षीराद्यैर्मधुरौषधसंस्कृतैः ॥
नारीं तैलेन माषैश्च पित्तलैः समुपाचरेत्।
क्षामप्रसन्नवदनां स्फुरच्छ्रोणिपयोधराम् ॥
स्रस्ताक्षिकुक्षिं पुंस्कामां विद्यादृतुमतीं स्त्रियम्।
पद्मं सङ्कोचमायाति दिनेऽतीते यथा तथा ॥

**प्रयतेत सधर्मिण्यामुत्पादयितुमात्मजम् ॥**
**व्युत्पादयितुमाचारे स्ववत्त्रातुमथापथात् ॥ ३० ॥**

टीका—प्रयतेत परमादरं कुर्यात् । कोऽसौ, दर्शनिकः । किं कर्तुम्, उत्पादयितुं जनयितुं । कम्, आत्मजमौरसं पुत्रं । क्षेत्रजाद्येकादशपुत्राणामनभ्युपगमात् । कस्यां, सधर्मिण्यां समानो धर्मो अस्यामस्तीति नित्ययोगे 'इन्' कुलस्त्रियामित्यर्थः । आत्मनो जात आत्मज इत्यन्वर्थतासिध्यर्थं कुलस्त्रीरक्षायां नित्यं यतितव्यमिति प्रतिपत्तव्यं । तथा प्रयतेत । कोऽसौ, सः । किं कर्तुं, व्युत्पादयितुं विविधमुत्कृष्टं ज्ञानं प्रापयितुं । कम्, आत्मजं । क, आचारे कुललोकसव्यवहारे । किंवत्, स्ववत् आत्मना तुल्यं । तथा प्रयतेतासौ । किं कर्तुं, त्रातुं रक्षितुं निवर्तयितुमित्यर्थः । कम् आत्मजं । कस्मात् अपथात् धर्मादिभ्रंशनोपायात् दुराचारादित्यर्थः । स्ववदित्यत्रापि योज्यं । अथशब्दः समुच्चये ॥ ३० ॥

सत्पुत्ररहितेन श्रावकेणोत्तरपदं प्रति प्रोत्साहो दुष्करः स्यादिति दृष्टान्तेनोपष्टम्भयन्नाह—

**विना सुपुत्रं कुत्र स्वं न्यस्य भारं निराकुलः ।**
**गृही सुशिष्यं गणिवत् प्रोत्सहेत परे पदे ॥ ३१ ॥**

---

ऋतावतीता योनिः स्याच्छुक्रं नातः प्रतीच्छति ।
मासेनोपचितं रक्तं धमनिभ्यामृतं पुनः ॥
ईषत्कृष्णं विगन्धं च वायुर्योनिमुखान्नुदेत् ।
ततः पञ्चेक्षणादेव कल्याणध्यायिनी त्र्यहम् ॥
मृजालङ्काररहिता दर्भसंस्तरशायिनी ।
क्षैरेयं यावकं स्तोकं कोष्ठशोधनकर्शनम् ॥
पर्णे शरावे हस्ते वा भुञ्जीत ब्रह्मचारिणी ।
चतुर्थेऽह्नि ततः स्नाता शुक्लमाल्याम्बरा शुचिः ॥
इच्छन्ती भर्तृसदृशं पुत्रं पश्येत्पुरः पतिम् ।
ऋतुस्तु द्वादशनिशाः पूर्वास्तिस्रोऽत्र निन्दिताः ॥
एकादशी च युग्मासु स्यात्पुत्रोऽन्यासु कन्यका ।

टीका—कुत्र कस्मिन् पुंसि । स्वमात्मीयं । भारं पोष्यादिनिर्वाहभरं । न्यस्य स्थापयित्वा । निराकुलो निर्द्वन्द्वः सन् । प्रोत्सहेत प्रकृष्टमुद्योगं कुर्यात् न कापीत्यर्थः । कोऽसौ, गृही प्रकृतो दार्शनिकः । क, पदे संयमस्थाने । किंविशिष्टे परे व्रतिकप्रतिमायां वानप्रस्थाश्रमे वा । कथं विना अन्तरेण । क, सुपुत्रं आत्मसमानमात्मजं । किंवत्, गणिवत् धर्माचार्यो यथा । क सुशिष्यमात्मसमानमेवाचार्यादिना । कुत्र श्रमणे । स्वं भारं सन्धधिपाहलक्षणं । न्यस्य निराकुलो निर्व्यापेक्षः सन् परे आत्मसंस्कारादौ मोक्षपदे वा प्रोत्सहेत, न कापीत्यर्थः । इदमत्रैदम्पर्यं— दर्शनिकेन धर्माचार्येण च परं पदमाश्रयितुमिच्छता सत्पुत्रः सच्छिष्यश्चात्मवत्स्थापनीयः ॥ ३१ ॥

प्रकृतमर्थमुपसंहरन् व्रतिकप्रतिमारोहणयोग्यतां सूत्रयन्नाह —

> दर्शनप्रतिमामित्थमारुह्य विषयेष्वरम् ।
> विरज्यन् सत्त्वसज्जः सन्व्रती भवितुमर्हति ॥ ३२ ॥

टीका—अर्हति योग्यो भवति । कोऽसौ, श्रावकः । किं कर्तुं, भवितुं सम्पत्तुं किंविशिष्टो, व्रती व्रतिकप्रतिमावान् । किंविशिष्टः सन् सत्त्वसज्जः धैर्यादिसात्त्विकभावान्वितः किं कुर्वन्, विरज्यन् स्वयमेव विरक्तिं गच्छन् । केषु विषयेषु कामिन्यादिषु । कथं —अरं पाक्षिकापेक्षया स्वस्य च प्राक्तनावस्थापेक्षया तिशयेन । किं कृत्वा, आरुह्य पर्यन्तं प्राप्य । कां दर्शनप्रतिमां । कथम्, इत्थमनेन पाक्षिकाचारसंस्कारेत्यादिपूर्वोक्तप्रकारेणेति भद्रम् ॥ ३२ ॥

इत्याशाधरविरचितायां स्वोपज्ञधर्मामृतसागारधर्मदीपिकायां भव्यकुमुदचन्द्रिकासञ्ज्ञायामादितो द्वादशः प्रक्रमाः तृतीयोऽध्यायः समाप्तः ॥ ३ ॥

---

# अथ चतुर्थोऽध्यायः।

अथ व्रतिकप्रतिमामध्यायत्रयेण प्रपञ्चयिष्यन् प्रथमं तावत्तल्लक्षणं संगृह्णाह—

**सम्पूर्णदृग्मूलगुणो निःशल्यः साम्यकाम्यया।**
**धारयन्नुत्तरगुणानक्षूणान्व्रतिको भवेत् ॥ १ ॥**

टीका—भवेत्। कोऽसौ, व्रतिकः। किं कुर्वन्, धारयन् अकृच्छ्रेण दधन्। कान्, उत्तरगुणान् वक्ष्यमाणान्। किंविशिष्टान्, अक्षूणान् निरतिचारान्। कया, साम्यकाम्यया इष्टानिष्टयो रागद्वेषोपरमवाञ्छया, न पुनर्लाभादीच्छया। किंविशिष्टः सन् सम्पूर्णदृग्मूलगुणः सम्पूर्णा उपयोगमात्राश्रयेणान्तरेण देशमात्राश्रयेण च बहिरङ्गेणातिचारेण रहितत्वादखण्डा दृक् सम्यक्त्वं, मूलगुणाश्च यस्य स तथोक्तः। पुनः किंविशिष्टः, निःशल्यः। शृणाति हिनस्तीति शल्यं शरीरानुप्रवेशिकाण्डादि, शल्यमिव शल्यं कर्मोदयविकारः शारीरमानसव्यथाहेतुत्वात्। तत् त्रिविधं मिथ्यात्वमायानिदानभेदात्। मिथ्यात्वं विपरीताभिनिवेशः, माया वञ्चना, निदानं तपःसंयमाद्यनुभावेन काङ्क्षाविशेषः, शल्यान्निष्क्रान्तो निःशल्यः॥ ननु च सम्पूर्णदृग्मूलगुण इत्यनेनैव शल्यपरिहारस्य सिद्धत्वात् व्यर्थमिदमिति चेन्नम्य, किन्त्वचिरप्रतिपन्नव्रतस्य पूर्ववि

---

१ तपःसंयमाद्यनुभावेन काङ्क्षाविशेषो निदानम्। तद् द्वेधा प्रशस्तेतरभेदात्। प्रशस्तं पुनर्द्विविधम्। विमुक्तिसंसारनिमित्तभेदात् तत्र विमुक्तिनिमित्तं कर्मक्षयाद्याकाङ्क्षा। उक्तं च—

*कर्मव्यपायं भवदुःखहानिं बोधिं समाधिं जिनबोधसिद्धिम्।*
आकाङ्क्षितं क्षीणकषायवृत्तेर्विमुक्तिहेतुः कथितं निदानम्॥

जिनधर्मसिद्ध्यर्थं तु जात्याद्याकाङ्क्षणं संसारनिमित्तम्।

जातिं कुलं बन्धुविवर्जितत्वं दरिद्रतां वा जिनधर्मसिद्ध्यै।
प्रयाचमानस्य विशुद्धवृत्तेः संसारहेतुर्गदितं निदानम्॥
*मोक्षेऽपि मोहादभिलाषदोषो विशेषतो मोक्षनिषेधकारी।*
*यतस्ततोऽध्यात्मरतो मुमुक्षुर्भवेत्किमन्यत्र कृताभिलाषः॥*

भ्रमसंस्काराद्रोप्यमाणतत्परिणामानुसरणनिवारणार्थं भूयो यत्न क्रियते। उपदेशे च पौनरुक्त्यं न दोष ॥ १ ॥

शल्यत्रयोद्धरणे हेतुमाह—

सागारो वाऽनगारो वा यन्निःशल्यो व्रतीष्यते।
तच्छल्यवत्कुदृङ्मायानिदानान्युद्धरेद्धृदः ॥ २ ॥

टीका–यद्यस्मात्कारणात्। इष्यते। कोऽसौ, व्रती। किंविशिष्टो, निःशल्य. किंविशिष्ट सन्, सागारो वा अनगारो वा। अत्रेयं भावना–शल्यापगमे सत्येव व्रतसम्बन्धाद्व्रती मन्यते, न हिंसाद्युपरतिमात्रव्रतसम्बन्धात् यथा बहुक्षीरघृतो गोमानिति व्यपदिश्यते। बहुक्षीरघृताभावात् सतीष्वपि गोषु न गोमान्, तथा सशल्यत्वात् सत्स्वपि व्रतेषु न व्रती। यस्तु निःशल्य. स व्रतीति। तत्तस्मात्। उद्धरेत् निष्कासयेत्। कोऽसौ, व्रतार्थी। कानि, कुदृङ्मायानिदानानि। कस्मात्, हृदो हृदयात्। किंवत्, शल्यवत् शल्यानि यथा॥२॥

शल्यसहचारीणि व्रतानि धिक्कुर्वन्नाह–

आभान्त्यसत्यदृङ्मायानिदानैः साहचर्यतः।
यान्यव्रतानि व्रतवद्दुःखोदर्काणि तानि धिक् ॥ ३ ॥

टीका–धिक् निन्द्यानि। कानि, तानि अव्रतानि व्रताभासानि। किंविशिष्टानि, दुःखोदर्काणि यत दु समुदर्क उत्तरफलं येषां तानि। यानि किं, यानि आभान्ति आभासन्ते। कानि, अव्रतानि। किंवत्, व्रतवत् व्रतानि यथा। कस्मात्, साहचर्यत सहचारित्वात्। कैः, असत्यदृशा मिथ्यात्वेन मायया निदानेन च ॥ ३ ॥

उत्तरगुणनिर्णयार्थमाह—

पञ्चधाऽणुव्रतं त्रेधा गुणव्रतमगारिणाम्।
शिक्षाव्रतं चतुर्धेति गुणाः स्युर्द्वादशोत्तरे ॥ ४ ॥

टीका—स्यु भवेयुः। के, गुणा संयमविकल्पाः। केषाम् अगारिणां गृहिणां। किंविशिष्टा, उत्तरे मूलगुणानन्तरसेव्यत्वादुत्कृष्टत्वाच्च। कति,

द्वादश । कथ,-मित्यनेन प्रकारेण । भवति । किं तत्, अणुव्रत अणुव्रतापेक्षया लघुव्रतमहिंसादि । कतिधा, पञ्चधा अस्य पञ्चधात्व बहुमतत्वादिष्यते क्वचित्तु राज्यभोजनमप्यणुव्रतमुच्यते। तथा भवति। किं तत्, गुणव्रत । कतिधा, त्रेधा । गुणार्थमणुव्रतानामुपकारार्थं व्रत गुणव्रत दिग्विरत्यादीनामणुव्रतानुबृंहणपरत्वात् । तथा भवति। किं तत्, शिक्षाव्रत । कतिधा, चतुर्धा शिक्षायै अभ्यासाय व्रत देशावकाशिकादीनां प्रतिदिवसाभ्यसनीयत्वात् । अत एव गुणव्रताद्‌स्य भेद । गुणव्रत हि प्रायो यावज्जीविकमाहु । अथवा शिक्षाविशेषादान शिक्षाप्रधान व्रत शिक्षाव्रत देशावकाशिकादेर्विशिष्टश्रुतज्ञानभावनापरिणतत्वेनैव निर्वाह्यत्वात् ॥

सामान्येन पञ्चाणुव्रतानि लक्षयन्नाह—

**विरतिः स्थूलवधादेर्मनोवचोऽङ्गकृतकारितानुमतैः ।**
**क्वचिदपरेऽप्यननुमतैः पञ्चाहिंसाद्यणुव्रतानि स्युः ॥५॥**

टीका—स्यु भवेयु । कानि, अहिंसाद्यणुव्रतानि । कति, पञ्च । विरति निवृत्ति । कस्मात्, स्थूलवधादे । कै, मन इत्यादि--कृतादयो भावे क्तसाधना । मनश्च वचश्च अङ्ग च मनोवचोऽङ्गानि, तेषां प्रत्येक कृत च कारित चानुमत च मनोवचोऽङ्गकृतकारितानुमतानि तै । केषां पञ्चाणुव्रतानि स्यु, क्वचिद्‌गृहवासनिवृत्ते श्रावके तथा अपरे गृहवासनिरते श्रावके । अननुमतैरनुमतिवर्जितैस्तै षड्भिस्तानि स्युरिति संक्षेप । इतो विस्तर --स्थूलजीवादिविषय वान्मिथ्यादृष्टीनामपि हिंसादित्वेन प्रसिद्धत्वाद्वा स्थूलो वधादि स्थूला हिंसानृतस्तेयाब्रह्मपरिग्रहा इत्यर्थ । ततो मनसा वाचा कायेन च पृथक्करणकारणानुमननैर्निवृत्तिरहिंसासूनृतास्तेयब्रह्मचर्यापरिग्रहाख्यानि पञ्चाणुव्रतानि क्वचिद्‌गृहवासनिवृत्ते श्रावके भवेयुरित्युत्कर्षवृत्त्याऽणुव्रतान्युपदिश्यन्ते। यान्यपरे गृहवासनिरते श्रावकेऽननुमतैरनुमतिविवर्जितैर्मनस्करणादिभि षड्भि स्थूलहिंसादिनिवृत्त्या सम्पद्यन्ते तानि मध्यमवृत्त्या व्रतान्यभिमन्यन्ते। तस्यापत्यादिभिर्हिंसादिकरणे तत्कारणे वा अनुमतेरवश्यप्रतिषेध्यत्वात् । स

उक्तच चारित्रसारे—

१ वधादसत्याच्चौर्याच्च कामाद्‌ग्रन्थान्निवर्तनम् ।
पञ्चधाऽणुव्रत राज्यभुक्ति षष्ठमणुव्रतम् ॥

भंगरूपत्वादित्वरिकाया वेश्यात्वेनान्यस्यास्त्वनाथतयैव परदारत्वात् । किं चास्य भाट्यादिना परेण किञ्चित्कालं परिगृहीतां वेश्यां गच्छतो भंग कथञ्चित्परदारत्वात्तस्याः । लोके तु परदारत्वारूढेर्न भंग इति भंगाभंगरूपोऽतिचार । अन्ये त्वपरिगृहीतकुलांगनामप्यन्यदारवर्जिनोऽतिचारमाहुः । तत्कल्पनया परस्य भर्तुरभावेनापरदारत्वादभङ्गो लोके च परदारतया रूढे- र्भंग इति भङ्गाभङ्गरूपत्वात्तस्य । एतेनेत्वरिकापरिगृहीतापरिगृहीतागमन- लक्षणमतिचारद्वयं तत्त्वार्थशास्त्रोद्दिष्टमपि सगृहीतं भवति । परविवाहकरणा- दयस्तु चत्वारो द्वयोरपि स्फुरन्तीति प्रथमोऽतिचारः ॥ १ ॥

परविवाहकरणं स्वापत्यव्यतिरिक्तानां कन्याफललिप्सया स्नेहसम्बन्धादिना वा परिणयनविधानं । एतच्च स्वदारसन्तोषवता स्वकलत्रेतरदारवर्जकेन च स्वकलत्रवेश्याभ्यामन्यत्र मनोवाक्कायैर्मैथुनं न कार्यं न च कारणीयमिति व्रतं यदा गृहीतं भवति तदाऽन्यविवाहकरणं मैथुनकारणमित्यर्थतः प्रतिषि- द्धमेव च भवति । तद्व्रती तु मन्यते विवाह एवायं मया क्रियते न मैथुनं कार्यत इति व्रतसापेक्षत्वादतिचारः । कन्याफललिप्सा च सम्यग्दृष्टेरव्युत्प- न्नावस्थायां सम्भवति । मिथ्यादृष्टेस्तु भद्रकावस्थायामनुग्रहार्थं व्रतादाने सा सम्भवति । ननु परविवाहनवत् स्वापत्यविवाहनेऽपि समान एव दोष इति चेत् सत्यं । किं तर्हि यदि स्वकन्याविवाहो न कार्यते तदा स्वच्छन्दचा- रिणी स्यात् । ततश्च कुलसमयलोकविरोधः स्यात् । विहितविवाहा तु पति- नियतस्त्रीत्वेन न तथा स्यात् । एष न्यायः पुत्रेऽपि विकल्पनीय । यदि पुन कुटुम्बचिन्ताकारकः कोऽपि स्वभ्रात्रादिर्भवेत्तदा स्वापत्यविवाहनेऽपि नियम एव श्रेयान् । यदा तु स्वदारसन्तुष्टो विशिष्टसन्तोषाभावात् अन्यत्कलत्रं परिणयति तदाऽप्यस्यायमतिचारः स्यात् । परस्य कलत्रान्तरस्य विवाहकर- णमात्मना विवाहनमिति व्याख्यानादिति द्वितीयोऽतिचार ॥ २ ॥

चित्व मण्डिमा तत्प्रधानवाक्प्रयोगः ॥ ३ ॥ स्मरतीव्राभिनिवेश –कामे- तिमात्रमाग्रहः । परित्यक्तान्यसकलव्यापारस्य तदध्यवसायितेत्यर्थः । यथा मुख- कक्षोपस्थान्तरेष्ववितृप्ततया लिङ्गं प्रक्षिप्य महतीं वेलां निश्चलो मृत इवास्ते । चटक इव चटकां मुहुर्मुहुः स्त्रियमारोहति । जातबलक्षयश्च वाजीकरणान्युप- युङ्क्ते । अनेन खल्वौषधादिप्रयोगेण गजप्रसेकी तुरगावमर्दी च पुरुषो भव तीति बुध्या इति चतुर्थः ॥ ४ ॥

अनङ्गक्रीडा अङ्गं साधनं देहावयवो वा तच्चेह मैथुनापेक्षया योनिर्मेहनं च ततोऽन्यत्र मुखादिप्रदेशे रतिः । यतश्च चर्मादिमयैर्लिङ्गैः स्वलिङ्गेन कृतार्थोऽपि स्त्रीणामवाच्यदेशं पुनः पुनः कुट्टाति । केशाकर्षणादिना वा क्रीडन् प्रबलरागमुत्पादयति साऽप्यनङ्गक्रीडोच्यते । इह च श्रावकोऽत्यन्तपापभीरुस्तया ब्रह्मचर्यं चिकीर्षुरपि यदा वेदोदयासहिष्णुतया तत्कर्तुं न शक्नोति तदा यापनामात्रार्थं स्वदारसन्तोषादि प्रतिपद्यते । मैथुनमात्रेण च यापनायां सम्भवयां विटत्वादिप्रयमर्थत प्रतिषिद्धमेव । तत्प्रयोगे हि न कश्चिद्गुणः । प्रत्युत सद्योऽतिरागोद्दीपनं बलक्षयस्तात्कालिकी पिष्टदा राजयक्ष्मादिरोगाश्च स्युः । तदुक्तं-ऐदम्पर्यमतो मुक्त्वा भोगानाहारवद्भजेत् । देहदाहोपशान्त्यर्थमभिध्यानविहानये ॥ १ ॥ एवं प्रतिषिद्धाचरणादङ्गो नियमबाधनाद्भङ्ग इत्येतेऽपि विटत्वादयस्त्रयोऽतिचाराः । यद्वा स्वदारसन्तोषी मैथुनमेव मया वेदवादी प्रत्याख्यातमिति स्वकल्पनया तत्र तदेव वर्जयति न विटत्वादिकं । परदारविवर्जकोऽपि परदारेषु मैथुनमेव वर्जयति नाशिष्टवाक्प्रयोगालिङ्गनादीनीति तयो कथञ्चिद्व्रतसापेक्षत्वाद्विटत्वादयोऽतिचाराः । स्त्रियास्तु पूर्ववत्परविवाहकरणादय । प्रथमस्तु यदा स्वकीयपतिर्वारकदिने सपत्न्या परिगृहीतो भवति तदा सपत्नीवारकं विलुप्य तं परिभुञ्जानाया अतिचारोऽतिक्रमादिना च परपुरुष (इव) स्वपति वा ब्रह्मचारिणमभिसरन्त्याः स्यात् ॥ ५८ ॥

अथ परिग्रहपरिमाणाणुव्रतं व्याचष्टे—

> ममेदमिति सङ्कल्पश्चिदचिन्मिश्रवस्तुषु ।
> ग्रन्थस्तत्कर्शनात्तेषां कर्शनं तत्प्रमाव्रतम् ॥ ५९ ॥

टीका—भवति । कोऽसौ, ग्रन्थ परिग्रहः । किंलक्षणो, ममेदमिति सङ्कल्पः इदं चेतनमचेतनं मिश्रं वा वस्तु मम सम्बन्धि मदीयं मत्स्वामिकमिति सङ्कल्पो मानसोऽध्यवसायो ममत्वपरिणामो मूर्च्छेति यावत् । केषु, चिद्वस्तुषु कलत्रपुत्रादिषु, अचिद्वस्तुषु गृहसुवर्णादिषु । मिश्रवस्तुषु चेतनाचेतनेषु । बहिः पुष्पवाटिकादिषु । अन्तरतश्च मिथ्यात्वादिषु । भवति । किं तत्, तत्प्रमाव्रतं परिग्रहपरिमाणाख्यमणुव्रतं । किं कर्शनमल्पीकरणं । केषां, तेषां चिता-

मचिता चिदचिता च वस्तुना । कस्मात्, तत्कर्षणात् यथोक्तमूर्च्छालक्षणपरि-ग्रहाल्पीकरणात् ॥ ५९ ॥

अन्तरङ्गसङ्गनिग्रहोपायमाह—

उद्यत्क्रोधादिहास्यादिषट्कवेदत्रयात्मकम् ।
अन्तरङ्गं जयेत्सङ्गं प्रत्यनीकप्रयोगतः ॥ ६० ॥

टीका—जयेत् निगृह्णीयात् । कोऽसौ, पञ्चमाणुव्रतार्थी । क, सङ्ग ग्रन्थ । किंविशिष्ट, अन्तरङ्ग आध्यात्मिक । किमात्मक, उद्यदित्यादि उद्यन्ति उदय-यन्ति विपच्यमानानि, उदितानां दुर्जयत्वात्, क्रोधादयोऽनन्तानुबन्ध्यप्र-त्याख्यानावरणवर्जिता, तान्निमित्यात्वसहितान्निगृह्यैव देशसंयमस्य प्रवृत्तत्वात् अष्टौ प्रत्याख्यानावरणसंज्वलनाख्या इह गृह्यन्ते, हास्यादिषट्क हास्यरत्यर-तिशोकभयजुगुप्सा, वेदा स्त्रीपुंनपुंसकवेदा रागाख्यास्तेषां त्रय वेदत्रय, क्रोधादयश्च हास्यादिषट्क च वेदत्रय च क्रोधादिहास्यादिषट्कवेदत्रयाणि, उद्यन्ति च तानि क्रोधादिहास्यादिषट्कवेदत्रयाणि च तान्येव आत्मा स्वरूप यस्यासौ तदात्मकस्त । केन जयेत्, प्रत्यनीकप्रयोगत यथास्वमुत्तमक्षमा-दिभावनया ॥ ६० ॥

बहिरङ्गसङ्गत्यागविधिमाह—

अयोग्यासंयमस्याङ्गं सङ्गं बाह्यमपि त्यजेत् ।
मूर्च्छाङ्गत्वादपि त्यक्तुमशक्यं कृशयेच्छनैः ॥ ६१ ॥

टीका—त्यजेत् । कोऽसौ, पञ्चमाणुव्रती । क, सङ्ग । किंविशिष्ट, बाह्य वस्तुक्षेत्रादिक । अन्तरङ्गसङ्गत्यागापेक्षयाऽपिशब्द समुच्चये । किंविशिष्टम्, अङ्ग साधन । कस्य, अयोग्यासयमस्य अयोग्य श्रावकस्य कर्तुमनुचितोऽसयम स चेहानारम्भजत्रसवधो व्यर्थं स्थावरवध परदारगमनादिश्च, अयोग्यश्चासावसयमश्चायोग्यासयमस्तस्य । कुतो हेतो, मूर्च्छाङ्गत्वात् मोहो-दयनिमित्तत्वात् । यस्त्वसौ त्यक्तुमशक्यस्तत्त्यागविधिमाह—कृशयेत् स्वल्पी कुर्यात् । क, त बाह्यसङ्ग । किंविशिष्टमपि, त्यक्तुमशक्यमपि अशक्यवर्जनमपि ।

कथं, शनैः मनाक् समयपरिपाट्या कालक्रमेण परिग्रहसञ्ज्ञया अनादिसन्तत्या प्रवर्तमानत्वेन सहसा तत्त्यागस्य कर्तुमशक्यत्वात् कृतस्यापि तद्वासनावशाद्भङ्गसम्भावनाच्चैतदुच्यते ॥ ६१ ॥

एतदेव प्रपञ्चयन्नाह–

देशसमयात्मजात्याद्यपेक्षयेच्छां नियम्य परिमायात्।
वास्त्वादिकमामरणात्परिमितमपि शक्तितः पुनः कृशयेत्॥६२॥

टीका––परिमायात् परिमितं कुर्यात्। किं तत्, वास्त्वादिकं वास्तुक्षेत्रधनधान्यद्विपदचतुष्पदशयनासनयानकुप्यभाण्डलक्षणं दशभेदं बाह्यग्रन्थं। किं कृत्वा, नियम्य सन्तोषभावनया निगृह्य। कां, इच्छां परिग्रहतृष्णां। कया, देशाद्यपेक्षया। देशो वास्यमानो जनपदः, समयः कालः, आत्मा स्वात्मा, जातिर्वणिक्त्वादिः, देशश्च समयश्च आत्मा च जातिश्च ता आद्यो येषां स्वान्वयवयःपदव्यादीनां ते देशादयस्तेषामपेक्षया तानाश्रित्येत्यर्थः। कथं परिमायात्, आमरणात् मरणावधि यावज्जीवमित्यर्थः। तथा कृशयेत् [illegible]। किं तत्परिमितमपि वास्त्वादिकं। कथं पुनः। कस्मात्, शक्तितः नैःसङ्ग्यभावनया समुत्पन्नां स्वशक्तिमपेक्ष्येत्यर्थः ॥ ६२ ॥

परिग्रहं बहुभणित्या दूषयन्नाह—

अविश्वासतमोनक्तं लोभानलघृताहुतिः।
आरम्भमकराम्भोधिरहो श्रेयः परिग्रहः ॥६३॥

टीका—अहो आश्चर्यं। श्रेयः सेव्यः पुंसां कल्याणं वा। कोऽसौ, परिग्रहः। किंविशिष्टः, अविश्वासतमोनक्तं अविश्वास एव तमो ध्वान्तं दुःखहेतुत्वात् तत्र नक्तं रात्रिस्तद्धेतुत्वादिति अविश्वासतमोनक्तं। तथा लोभ एवानलोऽग्निश्चित्तसन्तापकत्वात् तत्र घृताहुतिः सर्पिःप्रक्षेपः प्रदीपकत्वादिति लोभानलघृताहुतिः। तथा आरम्भमकराम्भोधिः आरम्भाः कृष्यादयस्त एव मकरास्त्रासातङ्कनिमित्तत्वात् तत्र अम्भोधिः समुद्रः उत्पत्तिनित्यप्रवृत्तिनिमित्तत्वादित्यारम्भमकराम्भोधिः ॥ ६३ ॥

पञ्चमाणुव्रतातिचारपञ्चकनिषेधविधिमाह–

वास्तुक्षेत्रे योगाद्धनधान्ये बन्धनात्कनकरूप्ये।
दानात्कुप्ये भावाच्च गवादौ गर्भतो मितिमतीयात् ॥६४॥

टीका—नातीयान्नातिक्रमेत् । कोऽसौ, परिग्रहपरिमाणाणुव्रती । कां, मिति व्रतविषयीकृत परिमाण । क, वास्तुक्षेत्रे वास्तुनि च क्षेत्रे च । कस्मात् योगात् वास्त्वन्तरसंयोजन क्षेत्रान्तरसंयोजन चाश्रित्य । तथा धनधान्ये धने च धान्ये च न मितिमतीयात् । कस्मात्, बन्धनात् बन्धन रज्ज्वादिनियन्त्रण सत्यङ्कारदानादि वाश्रित्य । तथा कनकरूप्ये सुवर्णे च रूप्ये च न मितिम तीयात् । कस्मात्, दानात् दानमाश्रित्य । तथा कुप्ये सुवर्णरूप्याभ्यामन्यत्र कांस्यरथादिद्रव्ये न मितिमतीयात् । कस्मात्, भावात् भाव परिमाणान्तर अभिप्राय चाऽऽश्रित्य । तथा गवादौ गोमहिषीवडवादिचतुष्पदपत्तिशुका दिद्विपदवर्गे न मितिमतीयात् । कस्मात् गर्भतो गर्भमाश्रित्येति समन्वय ॥

इतस्तदर्थो विस्तरत कथ्यते—तत्र वास्तु गृहादि ग्रामनगरादि च । तत्र गृहादि त्रेधा खातोच्छ्रिततदुभयभेदात् । तत्र खात भूमिगृहादिक उच्छ्रित प्रासादादिक, खातोच्छ्रित च भूमिगृहोपरिगृहादिसन्निवेश । क्षेत्र सस्योत्पत्तिभूमि । तत् त्रेधा सेतुकेतूभयभेदात । तत्र सेतुक्षेत्र यदरघट्टादिजलेन सिच्यते । केतुक्षेत्र आकाशोदकपातनिष्पाद्यसस्य । उभयमुभयजलनिष्पाद्य सस्य । वास्तु च क्षेत्र च वास्तुक्षेत्रमिति समाहारनिर्देशोऽग्रेतनत्र च प्राय मन्यस्य पञ्चविधत्वकल्पनयाऽतीचारपञ्चकस्य सुखप्रबोधनार्थं । तत्र वास्तु क्षेत्रे योगादिभित्त्याद्यपनयेन वास्तुक्षेत्रान्तरमीलनान्तरमाश्रित्य परिमित परिग्रह श्रावको न मितिमतीयात देवगुरुसाक्षिकव्रतग्रहणकाले यावज्जीव चतुर्मासादिकालावधि वा प्रतिपन्ना सन्ख्यां नातिक्रमेत् । वास्त्वादिकमेव मया विपुलीक्रियते न प्रतिपन्ना तत्सन्ख्याऽतिक्रम्यत इति बुध्या तद्विषय वा हस्तादिपरिमाण सहसाकारादिना नातिक्रमेत् । अन्यथा वास्तुक्षेत्रप्रमाणाति क्रमो नाम प्रथमोऽतिचार स्यात् । व्रतसापेक्षस्यैव स्वबुध्या व्रतभङ्गमकुर्वतोऽ तिचारत्वव्यवस्थापनात ॥ १ ॥

धन गणिमादिभेदात् चतुर्विध । तत्र गणिम पूगफलजातिफलादि । धरिम कुंकुमकर्पूरादि । मेय स्नेहलवणादि । परीक्ष्य रत्नवस्त्रादि । धान्य व्रीह्या-

एते च क्षेत्रवास्तुहिरण्यरूप्यधनधान्यदासीदासकुप्यप्रमाणातिक्रमा इति तत्त्वार्थमतेन पञ्चातिचाराः प्रपञ्चिताः । स्वामिमतेन त्विमे-अतिवाहनाति संग्रहविस्मयलोभातिभारवहनानि । परिमितपरिग्रहस्य च विक्षपाः पञ्च लक्ष्यन्ते ॥ १ ॥ अत्रातिवाहनं लोभावेशवशात् वृषभादीनां शक्त्यतिक्रमेण दूरमार्गे नयनं । अतिसंग्रहः इदं धान्यादिकमग्रे विशिष्टं लाभं दास्यतीति लोभावेशादतिशयेन संग्रहणं । अतिविस्मयो धान्यादौ प्रपञ्चलाभेन विक्रीते मूलतोऽप्यसंगृहीते वा तत्क्रयाणकनाधिकेऽर्थे लब्धे लोभावेशादतिविषादः । अतिलोभो विशिष्टेऽर्थे लब्धेऽपि अधिकलाभाकांक्षा । अतिभारवहनं लोभावेशादधिकभारारोपणं ॥ सोमदेवपण्डितास्त्विदमाह-कृतप्रमाणो लोभेन धनाद्यधिकसंग्रहः ॥ पञ्चमाणुव्रतज्यानीं करोति गृहमेधिनाम् ॥१॥ तच्चैतच्च परेऽप्यूह्यास्तदत्यया इत्यनेन संगृहीतम् ॥ ६४ ॥

एवं निर्मलीकृतपरिग्रहव्रतपालकस्य फलं दृष्टान्तेन स्फुटयन्नाह—

य: परिग्रहसंख्यानव्रतं पालयतेऽमलम् ।
जयवाज्जितलोभोऽसौ पूजातिशयमश्नुते ॥ ६५ ॥

टीका-यः पालयते रक्षयति । किं तत्, परिग्रहसंख्यानव्रतं । कथं कृत्वा, अमलं यथोक्तातिचाररहितं । असौ श्रावकः पूजातिशयं शक्रादिकृतामर्चनां मश्नुते लभते । किंविशिष्टः, यतो जितलोभः जितलोभत्वादित्यर्थः । किंवत्, जयवत् मेघस्वराख्यकुरुराजो यथा ॥ ६५ ॥

इत्थं निरतिचाराणुव्रतपरिणत्यनुपालनाय निर्मलशीलसप्तकपालनायामुपासकमुत्थापयितुं तदनुभावमाह—

पञ्चाप्येवमणुव्रतानि समतापीयूषपानोन्मुखे
सामान्येतरभावनाभिरमलीकृत्यार्पितान्यात्मनि ।
त्रातुं निर्मलशीलसप्तकमिदं ये पालयन्त्यादरात्
ते सन्यासविधिप्रमुक्ततनवः सौर्वीः श्रियो भुंजते ॥६६॥

टीका—भुंजते अनुभवन्ति । के, ते निर्मलाणुव्रतशीलपालिनो भव्याः । काः, श्रियः सम्पदः । किंविशिष्टाः, सौर्वीः स्वर्भवाः यथास्वं सौधर्मादिच्यु-

सान्तरूपसम्बन्धिनी । किंविशिष्टाः सन्तः, सन्न्यासेत्यादि सन्न्यासविधिना सप्तदशाध्यायोक्तेन क्रमेण सकलमहाव्रतमक्षताल्क्षणेन मुक्ता त्यक्ता तनुः शरीरं यैस्ते यथोक्ताः । सति साधने निस्तरणभणितिरियं । ये के, ये पालयन्ति । किं तत्, इदमनन्तराध्याये वक्ष्यमाणं । विमलशीलसप्तकं । कस्मात्, आदरात् तत्परतया । किं कर्तुं, त्रातुं पालयितुं । निर्वहणार्थमिदं । कानि, अणुव्रतानि । कति, पञ्च अपिशब्दादेकं द्वे त्रीणि चत्वारि वा । कथं, एवं उक्तप्रकारेण । किंविशिष्टानि सन्ति, अर्पितानि परिणमितानि । क्व, आत्मनि अन्तस्तत्त्वे । उपपन्नप्रकाशनेयं । किंविशिष्टे, समतापीयूषपानोन्मुखे साम्यामृतपानाद्यभिमुखे । किं कृत्वा, अमलीकृत्य तत्सहचारिभ्य प्रक्षाल्य । उद्द्योतनोक्तिरियं । काभिः, सामान्येतरभावनाभिः सामान्यभावनाभिर्मैत्र्यादिभिर्विशेषभावनाभिः प्रतिव्रतं पञ्चशो नियमिताभिर्महाव्रताधिकारोक्ताभिरिति भद्रम् ॥ ६६ ॥

इत्याशाधरविरचितायां स्वोपज्ञधर्मामृतसागारधर्मदीपिकायां
भव्यकुमुदचन्द्रिकासञ्ज्ञायामादितस्त्रयोदश
प्रक्रमाश्च चतुर्थोऽध्यायः समाप्तः ॥ ४ ॥

---

# अथ पञ्चमोऽध्यायः

अथ शीलसप्तकं व्याकर्तुकामस्तद्विकल्पभूतानि गुणव्रतानि तावल्लक्षयति–

यद्गुणायोपकारायाणुव्रतानां व्रतानि तत् ।
गुणव्रतानि त्रीण्याहुर्दिग्विरत्यादिकान्यपि ॥ १ ॥

टीका——तत्तस्मादाहुर्ब्रुवन्ति । स्वामिमतानुसारिणः । कानि, गुणव्रतानि । कति, त्रीणि । तानि, दिग्विरत्यादिकानि दिग्विरतिमनर्थदण्डविरतिं भोगोपभोगपरिमाणं । अपिशब्दः सितपटोक्तखरकर्मज्ञापनार्थं । यद्यस्मात् भवन्त्यमूनि व्रतानि । कस्मै, गुणाय । कोऽर्थः, उपकाराय । केषाम्, अणुव्रतानाम् ॥ १ ॥

किं तद्दिग्व्रतमित्याह——

यत्मसिद्धैरभिज्ञानैः कृत्वा दिक्षु दशस्वपि ।
नात्येत्यणुव्रती सीमां तत्स्याद्दिग्विरतिर्व्रतम् ॥ २ ॥

टीका—स्यात् । किं तत् । व्रतं गुणव्रतमित्यर्थः । नामैकदेशो हि व्रतशब्दो नाम्न्यपि वर्तते भीमादिवत् । किं नाम, दिग्विरतिः दिक्षु विरतिर्नियमितसीम्नो बहिर्यानायासनिवृत्ति । यस्कि, यस्मात्येति नातिक्रम्य गच्छति । कोऽसौ, अणुव्रती न तु महाव्रती तस्य सर्वारम्भपरिग्रहविरतत्वेन समितिपरत्वेन च नृलोके यथाकाम सञ्चारादिदिग्विरत्यनुपपत्तेः । कां नात्येति, सीमां मर्यादां । किं कृत्वा, प्रतिपद्य । कां, सीमां । कासु, दिक्षु । कतिषु, दशसु । अपिशब्दादेकद्वित्र्यादिष्वपि यावज्जीवमल्पकालं चापि । कैः, अभिज्ञानैः समुद्रनद्यादिभिश्चिन्हैः । किंविशिष्टैः, प्रसिद्धैः दिग्विरतिमर्यादाया दातुर्गृहीतुश्च प्रतीतैः ॥ २ ॥

दिग्व्रतेनाणुव्रतिनोऽपि महाव्रतित्वमुपपादयति—

दिग्विरत्या बहिः सीम्नः सर्वपापनिवर्तनात् ।
तप्तायोगोलकल्पोऽपि जायते यतिवद्गृही ॥ ३ ॥

टीका—जायते भवति । गृही । किंवत्, यतिवत् महाव्रती यथा । कस्मात्, सर्वपापनिवर्तनात् सर्वपापानि स्थूलेतरहिंसादीनि भोगोपभोगादीनि च तेभ्यो निवर्तनात् विरमणात् तेषां निवारणाद्वा । क्व, बहिः परतः । कस्याः, सीम्नः प्रतिपन्नमर्यादायाः । कया, दिग्विरत्या दिग्विरतिगुणव्रतेन । किंविशिष्टोऽपि गृही, तप्तायोगोलकल्पोऽपि सन्तप्तलोहपिण्ड इव आरम्भपरिग्रहपरत्वेन सर्वत्र गमनभोजनशयनादिक्रियासु जीवोपमर्दकत्वात् ॥ ३ ॥

एतदेव दर्शयन्नाह—

दिग्व्रतोद्रिक्तवृत्तघ्नकषायोदयमान्द्यतः ।
महाव्रतायतेऽलक्ष्यमोहे गेहिन्यणुव्रतम् ॥ ४ ॥

टीका—महाव्रतायते महाव्रतमिवाचरति नियमितदिग्विभागाद्बहिः सर्वसावद्यनिवर्तकत्वात् । न तु महाव्रतं भवति तद्घातिनिबन्धकोदयसद्भावात् । किं तत्, अणुव्रतं । क्व, गेहिनि गृहस्थे । किंविशिष्टे, अलक्ष्यमोहे निश्चेतुमशक्यभावे

प्रत्याख्यानावरणाख्यचारित्रमोहपरिणामे । कस्मात्, दिग्व्रतेत्यादि दिग्व्रतेनोद्दिष्टमुत्कर्षं नीतं प्रतनुकषायाणां प्रत्याख्यानावरणाख्यद्रव्यक्रोधादीनामुदयस्य विपाकस्य मान्द्यमनौत्कट्यं यतस्तस्मात् दिग्विरतिमन्दतरीकृतप्रत्याख्यानावरणविपाकादित्यर्थः ॥ ४ ॥

दिग्विरत्यतिचारानाह—

सीमविस्मृतिरूर्ध्वाधस्तिर्यग्भागव्यतिक्रमाः ।
अज्ञानतः प्रमादाद्वा क्षेत्रवृद्धिश्च तन्मलाः ॥ ५ ॥

टीका—भवन्ति । के ते, तन्मलाः दिग्व्रतातिचाराः । कति, पञ्च । कथं, सीमविस्मृतिरूर्ध्वभागव्यतिक्रमोऽधोभागव्यतिक्रमस्तिर्यग्भागव्यतिक्रमः क्षेत्रवृद्धिश्चेति । कस्मात्, अज्ञानतः प्रमादाद्वेति संक्षेपः । इतो विस्तरः—तत्र सीमविस्मृतिः—नियमितमर्यादाया अज्ञानतो मत्यपाटवसन्देहादिना प्रमादाद्वाऽतिव्याकुलत्वान्यमनस्कत्वादिना स्मृतिभ्रंशः । तथाहि—केनचित्पूर्वस्यां दिशि योजनशतरूपं परिमाणं कृतमासीत् । गमनकाले च स्पष्टतया न स्मरति किं शतं परिमाणं कृतमुत पञ्चाशत् तस्य चेत् पञ्चाशतमतिक्रामतोऽतिचारः । शतमतिक्रामतो भङ्गः सापेक्षत्वनिरपेक्षत्वाभ्यां चेति प्रथमोऽतिचारः । ऊर्ध्वेत्यादि ऊर्ध्वं गिरितरुशिखरादौ, अधो ग्रामभूमिगृहकूपादौ, तिर्यक्पूर्वादिदिक्षु येऽमी भागा नियमितप्रदेशास्तेषां व्यतिक्रमाः । उल्लङ्घनानि । एते च त्रयोऽप्यनाभोगातिक्रमादिभिरेवातिचारा भवन्ति । अन्यथा प्रवृत्तौ तु भङ्ग एव । क्षेत्रवृद्धिः—क्षेत्रस्य पूर्वादिदिशाभ्यां दिग्विरतिविषयस्य ह्रस्वस्य सतो वृद्धिः पश्चिमादिक्षेत्रान्तरपरिमाणप्रक्षेपेण दीर्घीकरणं । तथाहि—केनचित्पूर्वापरदिशोः प्रत्येकं योजनशतं परिमाणं कृतं एकत्र क्षेत्रं गमनकाले वर्द्धयतो व्रतसापेक्षत्वादतिचारः । यदि चानाभोगात् क्षेत्रपरिमाणमतिक्रान्तं भवति तदा निवर्तितव्यं ज्ञाते वा न गन्तव्यमन्योऽपि न विसर्जनीयः । अथाज्ञतया कोऽपि गतः स्यात्तदा यत्तेन लब्धं तत्त्याज्यमिति पञ्चमः ॥ ५ ॥

अथानर्थदण्डव्रतं लक्षयति—

पीडा पापोपदेशाद्यैर्देहाद्यर्थाद्विनाऽङ्गिनाम् ।
अनर्थदण्डस्तत्त्यागोऽनर्थदण्डव्रतं मतम् ॥ ६ ॥

टीका—मत सम्मत सूरीणां । किं तत्, अनर्थदण्डव्रत । किं सत्, तस्यागस्त स्यानर्थदण्डस्य वर्जन । य किं, योऽनर्थदण्ड । किं, पीडा पीडन । केषा, अङ्गिनां त्रसस्थावरजीवानां । कै पापोपदेशाद्यै पापोपदेशहिंसादानदु श्रुत्यपध्यानप्रमादचर्याख्यैर्व्यापारै । कथ, विना । कस्मात्, देहाद्यर्थात् स्वस्य स्वकीयजनानां वा शारीरवाङ्मन प्रयोजनात् ॥ ६ ॥

पापोपदेशस्वरूप तद्विरति चाह—

पापोपदेशो यद्वाक्यं हिंसाकृष्यादिसंश्रयम् ।
तज्जीविभ्यो न तं दद्यान्नापि गोष्ठ्यां प्रसञ्जयेत् ॥ ७ ॥

टीका—भवति । कोऽसौ, स पापोपदेश । यत्किं, यद्वाक्य । किंविशिष्ट हिंसाकृष्यादिसंश्रय । हिंसा मृगयाद्यादिभि कृषिवाणिज्यादिभिश्च संश्रय सम्बन्धो यस्य तत्तथोक्त तद्विषयमित्यर्थं । हिंसाद्यारम्भेति पाठे तु हिंसादिप्रधाना आरम्भा उपक्रमा इति व्याख्येय । न दद्यात मृगास्तोयाशयमायाता किमुपविष्टास्तिष्ठन्त्येत्यादिरूपेण न सम्पादयेत् । कोऽसौ अनर्थदण्डव्रतार्थी । क त पापोपदेश । केभ्य , तज्जीविभ्य व्याधवञ्चकचोरादिभ्य कृषीवलकिरातादिभ्यश्च । नापि प्रसञ्जयेत् पुन पुन प्रवर्तयेत् कथान्तरसम्बन्धे वा नावतारयेत् । क त । कस्यां, गोष्ठ्यां सद्कथायाम् ॥ ७ ॥

हिंसोपकरणदानपरिहारमाह—

हिंसादानं विषास्त्रादिहिंसाङ्ग(ग)स्पर्शनं त्यजेत् ।
पाकाद्यर्थं च नाग्न्यादि दाक्षिण्याविषयेऽर्पयेत् ॥ ८ ॥

टीका त्यजेत् कुर्यादनर्थदण्डव्रतार्थी । किं तत् हिंसोपकरणाना दान हिंसादान । मयूरव्यंसकत्वात्समास । तदेव व्याचष्ट विषास्त्राद्यादिना विषास्त्रादीनां गरलप्रहरणहलशकटकुदालकुद्दालादीनां हिंसाङ्गानां प्राणिवधसाधनानां स्पर्शन दान विषास्त्रादिहिंसाङ्गस्पर्शन । न चार्पयेत् नापि ढौकयेद्व्रती । किं तत्, अग्न्यादि वह्निघरट्टमुसलोदूखलादि । किमर्थं, पाकाद्यर्थं पचनपेषणकुट्टनादिनिमित्त । क दाक्षिण्याविषये परस्परव्यवहाराविषयादन्यत्र ॥ ८ ॥

दुःश्रुत्यपध्यानयो स्वरूप परिहार चाह—

चित्तकालुष्यकृत्कामहिंसाद्यर्थश्रुतश्रुतिम् ।
न दुःश्रुतिमपध्यानं नार्तरौद्रात्म चान्वियात् ॥ ९ ॥

टीका—नान्वियात् नानुवर्तयेत् प्रसङ्गवशाद्दायानमपि तत्क्षणान्निवर्तयेदित्यर्थं । कोऽसौ, अनर्थदण्डव्रतार्थी । का, दुःश्रुतिं । कीदृशीं, चित्तेत्यादि । कामश्च मन्मथो हिंसा च प्राणातिपात कामहिंसे ते आदी येषा आरम्भादीना ते कामहिंसाद्योऽर्था अभिधेया येषा तानि कामहिंसाद्यर्थानि तानि श्रुतानि शास्त्राणि । तत्र कामशास्त्र वात्स्यायनादि । हिंसाशास्त्र दन्तकादिमतं । आरम्भपरिग्रहशास्त्र वार्तानीति । साहसशास्त्र वीरकथा । मिथ्यात्वशास्त्र अद्वैतादि मतं । मदशास्त्र वर्णाना ब्राह्मणो गुरुरित्यादिग्रन्थ. । रागशास्त्रं वशीकरणादितन्त्र । तेषा श्रुतिराकर्णन उपलक्षणाद्दर्शनाद्यपि । चित्तस्य मनस कालुष्य रागद्वेषाद्यावेशश्चित्तकालुष्य तत्करोतीति चित्तकालुष्यकृत् । सा चासौ । कामहिंसाद्यर्थश्रुतश्रुतिश्च ताम् । न चान्वियादसौ । किं तत्, अपध्यान अपकृष्ट ध्यानमकार्यचिन्ताविरोध । किरूप, आर्तरौद्रात्म आर्तं ऋते दु खे भव । यदि वा अर्ति पीडा यातना च तत्र भव । रौद्र रोदयति अपरानिति रुद्रो दु खहेतुस्तेन कृत तस्य वा कर्म । आर्तं च रौद्र च आर्तरौद्रे ते आत्मानौ स्वभावौ यस्य तदार्तरौद्रात्म आर्तरौद्रविकल्पमित्यर्थ । न दुःश्रुतिमपध्यानमार्तरौद्रात्म चान्वियादिति पाठे तु–दुःश्रुतिं कामादिशास्त्रश्रवणलक्षणा, अपध्यान च नरेन्द्रत्वखचरत्वाप्सरोविद्याधरीपरिभोगादिविषय, आर्तं वैरिघातक्रियतादिविषय, रौद्र वा नान्वियादिति व्याख्येयम् ॥ ९ ॥

प्रमादचर्यालक्षण तत्त्याग च श्लोकद्वयेनाह—

प्रमादचर्या विफलक्ष्मानिलाग्न्यम्बुभूरुहाम् ।
खातव्याघातविध्यापसेकच्छेदादि नाचरेत् ॥ १० ॥

टीका–नाचरेत् न कुर्यादनर्थदण्डविरत । का, प्रमादचर्या । किरूपां, विफलमित्यादि । विफल निष्प्रयोजन क्ष्मादीना खातादिविषयभूतनादिलक्षणमित्यर्थं । तत्र क्ष्माया भूमे खात खनन विफल नाचरेत् । अनि-

शेषमन्ये बहवोऽर्थिन सन्ति तेऽपि ज्ञेष्यन्ति अह विज्ञापयिष्यामीत्येवम्-नालोच्य धर्मारम्भतृणाजीविभि कारयति । एव काष्ठच्छेदेष्टकापाकादिष्वपि वाच्य । तथाहि स्वोपकरण हिंसोपकरणान्तरेण सयुक्त धारयति यथा सयुक्त मुसलखलेन मुसल हलेन फाल शकटेन युग धनुषा शरान् इत्यादि । तथा सति च कश्चित सयुक्तमुलखलमुसलादिकमाददीत । वियुक्ते तु तस्मिन् सुखेन पर प्रतिषेद्धु शक्यते । एतद्धिंसोपकारिदानविरतेरतिचार । सेव्यार्थाधिकता सेव्यस्य भोगोपभोगलक्षणस्य जनको यावानर्थस्ततोऽधिकस्य तस्य करण भोगोपभोगानर्थक्यमित्यर्थ । अत्राय सम्प्रदाय यदि बहूनि स्नानसाधनानि तैलखल्यामलकादीनि गृह्णाति तदा लौल्येन बहव स्नानार्थ तडागादौ गच्छन्ति । ततश्च पूरकायाप्कायिकादिवधोऽधिक स्यात् । न चैव युज्यते ततो गृह एव स्नातव्य । तदसम्भवे तु तैलादिभिर्गृह एव शिरो घर्षयित्वा तानि सर्वाणि साधयित्वा तटागादितटे निविष्टो गालितजलेनाञ्जलिभि स्नायात् । तथा येषु पुष्पादिषु ससक्ति सम्भवति तानि परिहरेदिति सर्वत्र वक्ष्यामीति पञ्चाऽपि प्रमादविरतेरतिचार ॥ १२ ॥

अथ भोगोपभोगपरिमाणाख्यतृतीयगुणव्रतस्वीकरणविधिमाह—

भोगोऽयमियान् सेव्यः समयमियन्तं सदोपभोगोऽपि ।
इति परिमायानिच्छँस्तावधिकौ तत्प्रमाव्रतं श्रयतु ॥ १३ ॥

टीका—श्रयतु स्वीकरोतु । कोऽसौ, गुणव्रती । किं तत्, तत्प्रमाव्रत तयो भोगोपभोगयो प्रमा परिमाण तत्प्रमा तत्प्रमैव व्रत तत्र वा व्रत तत्प्रमाव्रत भोगोपभोगपरिमाणव्रतमित्यर्थ । क कुर्वन्, अनिच्छन् अनाकाक्षन् । कौ, तौ भोगोपभोगौ । किंविशिष्टौ, अधिकौ नव्यासेव्यतया प्रतिज्ञातास्यामतिरिक्तौ । किं कृत्वा, परिमाय परिमितीकृत्य । कथमिति विमिति भाग इत्यादि । अत्रैक प्रतिपक्षमुखेन वाक्यमन्यच्च विधिमुखेन । तत्राद्य भोगोऽय समयमियन्त न सेव्य इति । द्वितीय भोगोऽयमियान्वा समयमियन्त सेव्य इति । तत्राद्य व्याख्यायते—न सेव्यो नोपयोक्तव्य । कोऽसावय भोग्यतया प्रसिद्धो भोगो माल्यताम्बूलादि । कन, मया । क, समय काल । कियन्तम्, इयन्त एतावन्मात्र यावज्जीव दिवसमासादिपरिच्छिन्न वा कालमित्यर्थ । द्वितीय-

स्यागस्याश्रिय । था अथवा । सेव्य कोऽसौ, अयं भोग । केन, मया । कियान्, इयान् एतावान् । क, समय । किंविशिष्ट, इय त । तथा उपभोगोऽयं समय-मियन्तं न सेव्यो मयेत्येक उपभोगाऽयमियान्वा समयमियन्त मया न सेव्य नि द्वितीय । एतयोरपि पूर्ववद्व्याख्या । १३ ॥

भोगोपभोगयोर्लक्षणं तत्त्यागस्य च यमनियमविकल्पस्य नियतकालस्य च सम्यग्विशेषमाचष्टे—

भोगः सेव्यः सकृदुपभोगस्तु पुनःपुनः स्रगम्बरवत् ।
तत्परिहारः परिमितकालो नियमो यमश्च कालान्तः ॥१४॥

टीका— स भोगो भण्यते । य सकृदेकवारं सेव्य सेव्यते भुक्त्वा पुनर्न भुज्यत इत्यर्थ । किंवत्, स्रग्वत् उपलक्षणमेतदशनपानचन्दनताम्बूलादिर्यथा । स उपभोगो भण्यते सुधीभि । य पुन पुन सेव्यो भूयोभूय सेव्यते सेवित्वाऽपि पुन सेव्यत इत्यर्थ । किंवत्, अम्बरवत् अत्राप्युपलक्षणाद्-वस्त्राभरणकामिन्यादिर्यथा । अथवा स्रगम्बरवदिति भोगोपभोगलक्षणयोर्यथा-संख्यमुदाहरणं उदाहरणस्य दिङ्मात्रप्रदर्शकत्वात् । एवं तयोर्लक्षणमुक्त्वा तत्त्यागविशेषयो संज्ञाविशेषप्रकाशनार्थमाह तदित्यादि व्यपदिश्यते । कोऽसौ, तत्परिहार किं, नियम । नियम इति संज्ञया व्यवह्रियते इत्यर्थ किंविशिष्ट , परिमितकाल एकद्वित्र्यादिघटिकापरिच्छिन्नदिवसमासादिसमय । तथा व्यपदिश्यते । कोऽसौ तत्परिहार । किं, यम यम इति संज्ञया व्यवह्रियत इत्यर्थ । किंविशिष्ट , कालान्त कालो मरणम् सोऽवसान यस्य स कालान्त मरणपर्यन्त इत्यर्थ ॥ १४ ॥

त्रसघातबहुवधप्रमादविषयानिष्टानुपसेव्यार्थत्यागमनपद्धत्र मल्पनैषान्तर्भा-वयितुमाह—

पलमधुमद्यवदखिलस्त्रसबहुघातप्रमादविषयोऽर्थः ।
त्याज्योऽन्यथाऽप्यनिष्टोऽनुपसेव्यश्च व्रताद्धि फलमिष्टम् ॥

टीका—त्याज्य प्रत्याख्यातव्य । कोऽसौ, अयं इन्द्रियोपभोग्यो रसश्च । केन, भोगोपभोगपरिसंख्यानव्रतिना । किंविशिष्ट , त्रसेत्यादि—त्रस

द्वीन्द्रियादिजीवा बहव प्रचुराश्च स्थावरजीवाः त्रसाश्च बहवश्च त्रसबहवस्तेषां घातो त्रसबहुघातो त्रसघातो बहुघातश्चेत्यर्थः । प्रमादो धर्म अशनोपाय । त्रसबहुघातो च प्रमादश्च त्रसबहुघातप्रमादाः ते विषया यस्य स त्रसबहुघातप्रमादविषय । किंविशिष्टोऽखिल सर्वः । किंवत्, पल-मधुमद्यवत् । यथा त्रसघाताश्रयत्वात्पिशितं त्यज्यते, यथा च बहुवधाश्रयत्वान्माक्षिकं त्यज्यते, यथा च प्रमादाश्रयत्वान्मद्यं त्यज्यते तथा यथासंख्यं त्रसघाताद्याश्रयोऽर्थस्त्याज्य इत्यर्थः । तत्र त्रसघातविषयोऽन्तःसुषिरप्राय नालीनपलक्यासूरणनालप्रसूनमागन्तुजन्तूनां सम्मूर्छिमजन्तूनां च योग्यमभ्यावकाशं तथा बहुजन्तुयोग्यस्थानं केतकीनिम्बार्जुनारणिशिग्रुपुष्पम-धूकबिल्वादिफलादि च वस्तु । बहुघातविषयो गुडूचीमूलकाण्डुनार्द्रशृङ्ग-वेरादिकं । प्रमादविषयो वृष्टिविषमाद्रिकाधत्तूरकादि वस्तु । एतेन धनार्थं क्रूरव्यापाराणामपि त्याज्यत्वमुक्तं प्रतिपत्तव्यं । तथा त्याज्यो धर्मार्थिना । कोऽसौ, अखिलोऽर्थः । किंविशिष्टोऽनिष्टः । कथं, अन्यथाऽपि त्रसघाताद्यविषयोऽप्यर्थो योऽनिष्टो यदा स्वस्याप्यनभिमतः प्रकृतिसात्म्यको न भवति सोऽपि तदा प्रत्याख्येय इत्यर्थः । तथा त्याज्य । कोऽसौ, अखिलोऽर्थः । किंविशिष्टो, अनुपसेव्य इष्टोऽपि शिष्टानां शीलनायोग्य चित्रवस्त्रविकृतवेषाभरणादिरङ्गारलालामूत्रपुरीषश्लेष्मादिश्च । एतत्प्रत्याख्यानस्याप्यभिमतार्थहे-तुत्वमुखेन करणीयत्वं समर्थयते व्रताद्धि फलमिष्टमिति—हि यस्माद्भवति । किं तत्, फलं साध्यं । किंविशिष्टं, इष्टमभिप्रेतमभ्युदयादिकं । कस्मात्, व्रतात् योग्याद्विषयादभिसन्धिकृताया विरतेः ॥ १५ ॥

उक्तमेवार्थं भाष्यवदाख्यानार्थं श्लोकत्रयेण दर्शयति—

नालीसूरणकालिन्दद्रोणपुष्पादि वर्जयेत् ।
आजन्म तद्भुजां ह्यल्पं फलं घातश्च भूयसाम् ॥ १६ ॥

टीका—वर्जयेत् धर्मार्थी त्यजेत् । किं तत्, नाल्यादि—आदिशब्देन मूल-कार्द्रकनिम्बकुसुमकेतक्यादि । कथं, आजन्म यावज्जीवं । कुत, इत्याह—हि यस्मात् भवति । किं तत्, फलं जिह्वेन्द्रियप्रीणनमात्रं । किंविशिष्टं, अल्पं स्तोकं भक्ष्यमाणक्षणमात्रभावि । केषां, तद्भुजां नाल्यादिसूरणादिभक्षकाणां ।

भवति च । कोऽसौ, घात तद्भक्षणे वध । केषा, भूयसां बहुतराणा तदाश्रितजीवानाम् ॥ १६ ॥

उक्तमेवार्थं यतद्वार्थ्यं पुनर्विशेषतोऽभिधत्ते–

अनन्तकायाः सर्वेऽपि सदा हेया दयापरैः ।
यदेकमपि तं हन्तुं प्रवृत्तो हन्त्यनन्तकान् ॥ १७ ॥

टीका–हेया प्रत्याख्येया । सदा नित्य । के, अनन्तकाया । कति सर्वेऽपि । कै, दयापरै अनुकम्पाप्रधानै श्रावकै । कुत, इत्याह–यद्यस्मात्। हन्ति हिनस्ति । कोऽसौ, पुरुष । कान्, अनन्तकान् अनन्तप्रमितान् जीवान् कायशब्देनात्र जीवार्थस्य विवक्षितत्वादनन्ताश्च ते कायाश्च जीवाश्चेति विग्रह । किंविशिष्ट, प्रवृत्त । किं कर्तुं, हन्तु भक्षणादिद्वारेण मारयितु । क तमनन्तकाय । किंविशिष्ट, एक व्यवहारेणैकसल्यमपि किं पुनर्बह्वादीन्। एते चानन्तैर्जीवैरुपलक्षित कायो येषां तेऽनन्तकाया मूलादिप्रभवा वनस्पतिकायिका । तथा हि मूलजा आर्द्रकहरिद्राप्रभृतय । अग्रजा आर्यकोद्रिश्च ( ? ) प्रभृतय । पर्वजा देवनालेक्षुघेनादय । कन्दजा पलाण्डुसूरणादय । स्कन्धजा सल्लकीकण्टकपलाशादय । बीजजा शालिगोधूमादय । सम्मूर्च्छिमा नियतबीजाभावे स्वयोग्यपुद्गलैर्निष्पन्नशरीरा । उक्त च–मूलग्गपोरबीजा कन्दा तह खन्दबीयबीजरुहा । सम्मुच्छिमा य भणिया पत्तेया णतकाया य ॥ १७ ॥

आमगोरससम्पृक्तं द्विदलं प्रायशोऽनवम् ।
वर्षास्वदलितं चात्र पत्रशाकं च नाहरेत् ॥ १८ ॥

टीका—नाहरेत् न भक्षयेद्दयापर । किं तत्, द्विदल मुद्गमाषादिधान्य । किंविशिष्ट आमेत्यादि–आमेनानग्निपक्वेन गोरसेन क्षीरेण दध्ना अक्वथितक्षीरादिसम्भूतेन तक्रेण च सम्पृक्त मीलित । तद्धि सूक्ष्मबहुलजन्त्वाश्रितमागमे श्रूयते । तथा नाहरेत् । किं तत्, द्विदल । किंविशिष्ट, अनव पुराण कथ, प्रायश प्रायोग्रहणात्पुराणस्यापि चिरकालकृष्णीभूतकुलित्थादेरदृष्टजन्तुसम्मूर्च्छनस्याप्रतिषेध । तथा नाहरेत् । किं तत् द्विदल । किंविशिष्ट, अदलितमकृतद्विधाभाव । कदा, वर्षासु प्रावृषि हि मुद्गादीनामन्त प्ररोहस्या

युर्वेदे प्रसिद्धत्वात् त्रससम्मूर्छनस्य च दृष्टत्वेन सम्भाव्यमानत्वाद्भोग्यत्व। एतेन स्दानामपि तेषां निषेध उक्तः स्यात्। तथा नाहरेत्। किं तत्, पत्र शाकं पत्ररूपं हरीतकं न तु फलादिरूपं। तत्र सम्परत्र शुभूयिष्ठत्वात्। कदा, वर्षासु तदा त्रसस्थावरससक्तिबहुलत्वात्पत्रशाकस्यात्मफलत्वाच्च ॥ १८ ॥

एतद्व्रतस्य विशेषादानृत्सर्ग्गमिष्यद्व्यमुपदिशति—

भोगोपभोगकृशनात्कृशीकृतधनस्पृहः ।
धनाय कोट्टपालादिक्रियाः क्रूराः करोति कः ॥१९॥

टीका—कः करोति न कोऽपि विद्वानित्यर्थः । किंविशिष्टः, कृशीकृतध-नस्पृहः स्वल्पीकृतद्रविणाभिलाषः । कस्मात्, भोगोपभोगकृशनात् भोगोप-भोगयोर्विधिवत्स्वल्पीकरणात्। काः कोट्टपालादिक्रियाः तलारवाग्दिपाल-चौतपालशौल्किकादिव्यापारान् । किंविशिष्टाः क्रूराः प्राणिघातकर्कशाः । किमर्थं, धनाय द्रव्यार्थम् ॥ १९ ॥

भोगोपभोगव्रतातिचारपञ्चकं लक्षयति—

सचित्तं तेन सम्बद्धं सम्मिश्रं तेन भोजनम् ।
दुष्पक्वमप्यभिषवं भुञ्जानोऽत्येति तद्व्रतम् ॥ २० ॥

टीका—अत्येति अतिचरति श्रावकः । किं तत्, तद्व्रतं भोगोपभोगपरि-माणव्रतं । किं कुर्वाणो, भुञ्जानोऽभ्यवहरन् । किं तत्, भोजनं भुज्यत इति भोजनमाहारो भोग्यद्रव्यं । किं किं, सचित्तं तेन सम्बद्धं सम्मिश्रं तेन सचित्तेन सम्मिश्रं सम्बद्धं । दुष्पक्वमभिषवं च । अतिभावं । तत्र सचित्तं चेतनावद्द्रव्यं हरितकायं । अपक्वं कर्कट्यादि । त्रसबहुघातम्पादिना निवि-द्धेऽप्यत्र प्रवृत्तौ भङ्गभयादेवातिचाराभिधानं सनमापेक्षस्याप्रणिधानाति-क्रमादिना प्रवृत्तौ द्रष्टव्यमिति प्रथमः ॥ १ ॥

तेन सम्बद्धं सचित्तेनाप्रशिष्टं सचेतनवृक्षादिना सम्बद्धं गोन्दादिकं पक्व-फलादिकं वा सचित्तान्तर्बीजं खर्जूराम्रादि च तद्भक्षणं हि सचित्तभोजन-वर्जकस्य प्रमादादिना सावद्याहारप्रवृत्तिरूपत्वादतिचारः । अथवा बीजं

न्यक्षयामि तस्यैव सचेतनत्वात् कटाहं तु भक्षयिष्यामि तस्याचेतनत्वादिति बुध्या पक्वं खर्जूरादिफलं मुखे प्रक्षिपतः सचित्तवर्जकस्य सचित्तप्रतिबद्धाहारोऽसौ द्वितीयः ॥ २ ॥

सम्मिश्रं तेन सचित्तेन व्यतिकीर्णं विभक्तमशक्यं सूक्ष्मजन्तुकमित्यर्थः। अथवा सचित्तशबलं तत्संमिश्रं यथा आर्द्रकदाडिमबीजचिर्भटादिमिश्रं पूरणादिकं तिलमिश्रं च यवधानादिकं अयमपि पूर्ववदतिचारस्तृतीयः ॥ ३ ॥

दुःपक्वः सा तरस्तण्डुलभावेन अतिक्लेदनेन वा दुष्टं पक्वं मन्दपक्वं वा दुष्पक्वं, तच्चार्धस्विन्नं पृथुकतण्डुलयवगोधूमस्थूलमण्डकफलादिकमामदोषात्सह यदैहिकमप्यपायकारणं। तथा यावतांशेन तत्सचेतनं तावता तत्परलोकमप्युपहन्ति। पृथुकादेर्दुःपक्वतया किञ्चित्सचेतनावयवत्वसंभवाच्च चेतनाचेतनमिति भुञ्जानस्यातिचारश्चतुर्थः ॥ ४ ॥

अभिषवः सौवीरादिद्रवं वा वृष्यं वा। अयमप्यतिक्रमादिनाऽतिचारः पञ्चमः ॥ ५ ॥

चारित्रसारे पुनः सचित्ताद्याहाराणामतिचारत्वोपपादनार्थमिदमुक्तं एतत्पञ्चकस्याभ्यवहरणे सचित्तोपयोगः इन्द्रियमदवृद्धिर्वातादिप्रकोपो वा स्यात्। तत्प्रतीकारविधाने पापलेपो भवति। अतिथयश्चैनं परिहरेयुरिति ॥

अत्राह स्वामी यथा—विषयविषतोऽनुपेक्षाऽनुस्मृतिरतिलौल्यमतितृषानुभवौ ॥ भोगोपभोगपरिमा व्यतिक्रमाः पञ्च कथ्यन्ते ॥ १ ॥ विषयविषतो विषकल्पेषु विषयेषु अनुपेक्षा आदरो विषयानुभवात्तद्वेदनाप्रतीकारे जातेऽपि पुनरभीक्ष्णमासम्भाषणालिङ्गनाद्यवर्जनस्य प्रथमः ॥ अनुस्मृतिस्तु तदनुभवात्तत्प्रतीकारे जातेऽपि पुनः पुनर्विषयाणां सौन्दर्यसुखसाधनत्वाद्यनुचिन्तनमत्यासक्तिहेतुत्वाद्तिचारः ॥ अतिलौल्यं अतिगृद्धिस्तत्परिहारे जातेऽपि पुनः पुनस्तदनुभवाकाङ्क्षेत्यर्थः ॥ अतितृषा कामिनीभोगादेरतिगृध्या प्राप्त्याकाङ्क्षा। अ यनुभवो नियतकालेऽपि यदा भोगोपभोगावनुभवति तदा भयास्त्याऽनुभवति न पुनर्वेदनाप्रतीकारतयाऽतोऽतिचार इति ॥ एतेऽपि चात्र ग्रन्थे परेऽप्यूह्यास्तद् यथा इतिवचनात्संगृहीता एव ॥

तद्वच्चेमेऽपि श्रीसोमदेवपण्डिताभिमताः—दुष्पक्वस्य निषिद्धस्य जन्तुसम्बद्धमिश्रयोः ॥ अवीक्षितस्य च प्राशस्तत्संख्याक्षतिकारणम् ॥ १ ॥ अत्राह

सिताम्बराचार्यै –भोगोपभोगसाधनं यद्द्रव्यं तदुपार्जनाय यत्कर्म व्यापारस्तदपि भोगोपभोगशब्देनोच्यते कारणे कार्योपचारात्। तत कोटपालनादिखरकर्मापि त्याज्य। तत्र खरकर्मत्यागप्रसङ्गे भोगोपभोगव्रते अङ्गारजीविकादीन् पञ्चदशातिचारांस्त्यजेदिति। तदचारु। लोके सावद्यकर्मणां परिगणनस्य कर्तुमशक्यत्वात्। अथोच्यते अतिमन्दमतिप्रतिपत्त्यर्थं तदुच्यते तर्हि तान् प्रतीदमप्यस्तु। मन्दमतीन् प्रति पुनस्त्रसबहुघातादिपरिहारार्थं त्यागोपदेशेनैव परिहारस्य प्रदर्शितत्वादिति॥ २०॥

एतदेव श्लोकत्रयेण संगृह्णाह—

व्रतयेत्खरकर्मात्र मलान् पञ्चदश त्यजेत्।
वृत्तिं वनाग्न्यनस्फोटभाटकैर्यन्त्रपीडनम्॥ २१॥
निर्लाञ्छनासतीपोषौ सरःशोषं दवप्रदाम्।
विषलाक्षादन्तकेशरसवाणिज्यमङ्गिरुक्॥ २२॥
इति केचिन्न तच्चारु लोके सावद्यकर्मणाम्।
अगण्यत्वात्प्रणेयं वा तदप्यतिजडान् प्रति॥ २३॥

टीका—व्रतयेत् प्रत्याख्यापयेच्छ्रावकं। किं तत्, खरकर्म खरं क्रूरं प्राणिबाधकं कर्म व्यापारं। तथा त्यजेत् तद्व्रती। कान्, मलान् कर्मादानसंज्ञान्। कति, पञ्चदश वृत्तिमित्यादिना निर्दिष्टान्। क, अत्र खरकर्मव्रते। अत्र तावत् वृत्तिं जीविकां त्यजेत्। कैः, वनाग्न्यनस्फोटभाटकैः वनं चाग्निश्च अनश्च स्फोटश्च भाटकं च तैः पञ्चभिः। तथा यन्त्रपीडनं त्यजेत्। तथा निर्लाञ्छनासतीपोषौ त्यजेत् निर्लाञ्छनं चासतीपोषश्चेति द्वन्द्वः। तथा सरःशोषं त्यजेत्। तथा दवप्रदां दवदानं त्यजेत्। तथा विषादिवाणिज्यपञ्चकं त्यजेत्। किंविशिष्टं, अङ्गिरुक्। प्राणिबाधकं॥

तत्र वनजीविका छिन्नस्याच्छिन्नस्य वा वनस्पतिसमूहादेर्विक्रयेण तथा गोधूमादिधान्यानां घरट्टशिलादिना पेषणेन दलनेन वा वर्तनम्॥ १॥

अग्निजीविका अङ्गारजीविकाख्या षड्जीवनिकायविराधनाहेतुना अङ्गारकरणादिकर्मणा जीवनं॥ २॥

अनोजीविका शकटजीविका शकटरथतच्चक्रादीनां स्वयं परेण वा निष्पादनेन वाहनेन विक्रयणेन वृत्तिर्बहुभूतग्रामोपमर्दिका गवादीनां च बन्धादिहेतु ॥ ३ ॥

स्फोटजीविका उड्डादिकर्मणा पृथिवीकायिकाद्युपमर्दहेतुना जीवन ॥ ४ ॥

भाटकजीविका शकटादिभारवाहनमूल्येन जीवन ॥ ५ ॥

यन्त्रपीडाकर्म तिलयन्त्रादिपीडन तिलादिकं च दत्त्वा तैलादिप्रतिग्रहणम् । तत्कर्मणश्च पीडनाय तिलादिक्षोदात्तद्गतत्रससंघाताच्च दुष्टत्व ॥ ६ ॥

निर्लाञ्छन निर्लाञ्छनकर्म वृषभादेर्नासावेधादिना जीविका । निर्लाञ्छन नितरां लाञ्छनमङ्गावयवच्छेद ॥ ७ ॥

असतीपोष प्राणिघ्नप्राणिपोषो भाटिग्रहणार्थं दासपोषश्च ॥ ८ ॥

सर शोषो धान्यवपनाद्यर्थं जलाशयेभ्यो जलस्य सारण्या कर्षण । तत्र च जलस्य तद्गतानां त्रसानां तत्प्लावितानां च षण्णां जीवनिकायानां घात इति दूष्यत्वम् ॥ ९ ॥

दवदान दवाग्नेस्तृणादिदहनार्थं वितरण । तच्च फलनिरपेक्षतोऽप्यनाभोगान्वैर्वह्निज्वालन व्यसनजमुच्यते । पुण्यबुद्धिज तु यथा मदीये मरणकाले इयन्तो मम श्रेयोऽर्थं दीपोत्सवा करणीया इति पुण्यबुद्ध्या क्रियमाण । तृणदाहे सति नवतृणाङ्कुरोद्भेदाद्गावश्चरन्तीति वा क्षेत्रे वा सस्यसम्पत्तिवृद्ध्यर्थं अग्निज्वालनं अत्र जीवकोटीनां वधो व्यक्त एव ॥ १० ॥

विषवाणिज्य जीवघ्नवस्तुविक्रय ॥ ११ ॥

लाक्षावाणिज्य लाक्षाविक्रयण । लाक्षाया सूक्ष्मत्रसजन्तुघातानन्तकायिकप्रवालजालोपमर्दाविनाभाविना स्ववृक्षनिवृक्षादुद्धरणेन टङ्कणमन शिलासकृमालिप्रभृतीनां बाह्यजीवघातहेतुत्वेन *गुग्गुलिकाया* धातकीपुष्पत्वचश्च मद्यहेतुत्वेन तद्विक्रयस्य पापाश्रयत्वात् ॥ १२ ॥

दन्तवाणिज्य हस्त्यादिदन्ताद्यवयवानां पुलिन्दादिषु द्रव्यदानेन तदुत्पत्तिस्थाने वाणिज्यार्थं ग्रहण । ते हि तथा ग्रहण तत्प्रतिक्रयार्थं हस्त्यादिवधं कुर्वन्ति । अनाकारे तु दन्तादिक्रयविक्रये न दोष ॥ १३ ॥

केशवाणिज्य द्विपदादिविक्रय । तत्र च दोष तेषां पारवश्यवधबन्धादय क्षुत्पिपासापीडा चेति ॥ १४ ॥

रसवाणिज्यं नवनीतादिविक्रयः । नवनीते हि जन्तुसम्मूर्च्छनं । मधुमद्यादौ तु जन्तुघातोद्भवत्वं । मद्येन मदजनकत्वं तद्गतनिमित्तघातश्चेति तद्विक्रयस्य दुष्टत्वं ॥ १५ ॥

इति केचित् एव सिताम्बराचार्या ब्रुवते । न तत्सारं तदसुन्दरं । कुतः, अगण्यत्वात् परिसंख्यानुमतत्वस्य परत्वात् । केषां, आवश्यककर्मणां परपापक्रियाणां च, लोके व्यवहाराधिजने वर्तमानानां प्रणेय वा प्रतिपाद्य वा । किं तत्, मद्यपि परकर्मव्रतमपि । कथं, ग्रामे उद्दिश्य । कान्, अतिजडान् अतिमुग्धबुद्धीन् । जडान् प्रति त्रसबहुघातैत्यादिनैवोक्तत्वादिति भावः ॥ इति गुणव्रतप्ररूपणम् ॥ २१।२२।२३ ॥

अथ शिक्षाव्रतविधानार्थमाह—

> शिक्षाव्रतानि देशावकाशिकादीनि संश्रयेत् ।
> श्रुतचक्षुस्तानि शिक्षाप्रधानानि व्रतानि हि ॥ २४ ॥

टीका—संश्रयेत् प्रतिपद्येत श्रावकः । कानि, शिक्षाव्रतानि शिक्षा विद्योपाभ्यासः, शिक्षाप्रधानानि व्रतानि शिक्षाव्रतानि । किंविशिष्टानि, देशावकाशिकादीनि देशावकाशिकं, सामायिकं, प्रोषधोपवासः, अतिथिसंविभागश्च । कथम्भूतो भूत्वा, श्रुतिचक्षुः श्रुतज्ञानलोचनः । कुतः, इत्याह—हि यस्मात् भवन्ति । कानि, तानि व्रतानि । किंविशिष्टानि, शिक्षाप्रधानानि ॥ २४ ॥

देशावकाशिकं निरुक्त्या लक्षयति—

> दिग्व्रतपरिमितदेशविभागेऽवस्थानमस्ति मितसमयम् ।
> यत्र निराहुर्देशावकाशिकं तद्व्रतं तज्ज्ञाः ॥ २५ ॥

टीका—निराहुः प्रतिपादयन्ति निश्चितं ब्रुवन्ति । के, तज्ज्ञाः तद्व्रतनिर्वचनविदः । किं, तद्व्रतं । किमाख्यं, देशावकाशिकं देशे दिग्व्रतगृहीतपरिमाणस्य क्षेत्रस्य विभागे अवकाशोऽवस्थानं देशावकाशः, सोऽस्मिन्नस्तीति । यत्र यस्मिन् व्रते । अस्ति विद्यते । किं, तदवस्थानमवस्थितिः श्रावकस्य । क, दिगित्यादि—दिग्व्रते परिमितः प्रतिज्ञातपरिमाणो देशः क्षेत्रं

दिग्व्रतपरिमितदेशास्तस्य विभागस्तत्काले स्वावस्थानविषयाकृतोऽशस्त-स्मिन् । किंविशिष्टमवस्थान, मितसमय परिमितकाल ॥ ९५ ॥

तद्व्रतयुक्त लक्षयति—

**स्थास्यामीदमिदं यावदियत्कालमिहास्पदे ॥**
**इति सङ्कल्प्य सन्तुष्टस्तिष्ठन्देशावकाशिकी ॥ ९६ ॥**

टीका-भवति । कोऽसौ, श्रावक । किंविशिष्टो, देशावकाशिकी । किं कुर्वन्, तिष्ठन् लक्षणहेत्वो क्रियाया इति शतृष् । कालपरिच्छिन्नया नियतदेशे मन्तु-ष्टतयाऽवस्थानेन देशावकाशिकव्रतत्वपरिमाणस्य लक्ष्यमाणत्वात् । किं कृत्वा, सङ्कल्प्य मनसा सम्प्रधार्य । कथ, इति । किमिति स्थास्यामि स्थिति करि ष्यामह । क्व, इहास्मिन्नास्पदे स्थाने । कथ, इदमिद यावत् गृहगिरिग्रामा दिमवधि कृत्वा । कियत्काल, इयत्काल घटिकादिप्रहरदिनादिमात्र । किंवि-शिष्ट सन्, सन्तुष्ट सीमभ्यो बहिर्निगृहीततृष्ण मन् । दिग्व्रतवदस्यापि नियमितदेशाद्बहिर्लोभनिग्रहेण हिंसादीना च सर्वशो निवर्तनेनात्र फलवत्त्वात् अणुव्रतादीनामपि सम्पादकत्वाच्च सुतरा करणीयत्व चास्य शिक्षाव्रतत्व शिक्षा-प्रधान चास्यपरिमितकालभावित्वाचोच्यते ।न त्वरत्वेनदिग्व्रतवद्यावज्जीविकमपी ष्यते।।यत्तु तत्त्वार्थादौ गुणव्रतत्वमस्य श्रूयते तद्दिग्व्रतसक्षेपणलक्षणत्वमात्रस्यैव विवक्षितत्वाविवक्षितत्वाल्लक्ष्यते । दिग्व्रतसक्षेपकरण चात्रागुणव्रतादिसक्षेप कारणस्याप्युपलक्षण द्रष्टव्य । एषामपि सक्षेपस्यावश्यकर्तव्य चाप्रतिव्रत च सक्षेपकरणस्य भिन्नव्रत वे गुणा स्युर्द्वादशेति सख्याविरोध स्यात् ॥ ९६ ॥

सन्मतातिचारत्यागार्थमाह—

**पुद्गलक्षेपणं शब्दश्रावणं स्वाङ्गदर्शनम् ।**
**प्रैषं सीमबहिर्देशे ततश्चानयनं त्यजेत् ॥ ९७ ॥**

टीका—त्यजेत् तद्व्रतनैर्मल्यार्थी । किं, पुद्गलक्षेपणादिपञ्चक । तत्र पुद्गल-क्षेपण परिगृहीतदेशाद्बहि स्वयमगमनात्कार्यार्थितया व्यापारकारकाणा चोद्द नाय लोष्ठादिप्रेरण ॥ १ ॥ शब्दश्रावण शब्दम्याभ्युत्कासिकादे श्रावणमाह्वा-नीयाना श्रोत्रेऽनुपातन शब्दानुपातन नामातिचारमित्यर्थ ॥ २ ॥ स्वाङ्गदर्शन

शब्दोच्चारणं विना आह्वानीयानां दृष्टौ स्वरूपस्यानुपातनं रूपानुपाताख्यमतिचारं । पुनरयं मायावितयाऽतिचारत्वं याति ॥ ३ ॥ स्वयं मर्यादीकृतदेशे स्थित्वा ततो बहिः प्रेष्यं त्वमेव कुर्विति व्यापारणं । देशावकाशिकव्रतं हि मा भूद्गमनागमनादिव्यापारजनितः प्राण्युपमर्द इत्यभिप्रायेण गृह्यते । स तु स्वयंकृतोऽन्येन कारित इति न कश्चित्फलविशेषः । प्रत्युत स्वयं गमने ईर्यापथविशुद्धेर्गुणः । परस्य पुनरनिपुणत्वादीर्यासमित्यभावे दोष इति प्रेष्यप्रयोगं नाम चतुर्थमतिचारं त्यजेदिति सर्वत्र योज्यम् ॥ ४ ॥ ततश्चानयनं सीमबहिर्देशादिष्टवस्तुनः प्रेष्येण विवक्षितक्षेत्रे प्रापणं । यद्वत्स्वैन सीमबहिर्देशे स्थितं प्रेष्यं प्रति इदं कुर्वित्याज्ञापनं वा । एतौ चाप्युपपन्नबुद्धितया सहसाकारादिना वाऽतिचारौ स्तः । सर्वत्र च-सापेक्षस्य व्रतं हि स्यादतिचारोंऽशभञ्जनम्-इत्युपजीव्यम् ॥ २७ ॥

अप्ररूपितस्वरूपस्यानुष्ठानं न स्यादिति सामायिकस्वरूपं प्ररूपयति—

एकान्ते केशबन्धादिमोक्षं यावन्मुनेरिव ।
स्वं ध्यातुः सर्वहिंसादित्यागः सामायिकव्रतम् ॥२८॥

टीका—भवति । किं तत्, सामायिकव्रतं समस्य रागद्वेषविमुक्तस्य सतः अयो ज्ञानादीनां लाभः प्रशमसुखरूपः स समायः, समाय एव सामायः सामायः प्रयोजनमस्येति वा सामायिकं रागद्वेषहेतुषु माध्यस्थ्यमित्यर्थः अथवा समये आप्तसेवोपदेशे तत्र नियुक्तं कर्म सामायिकं व्यवहारेण जिनस्नपनार्चास्तुतिजपाः । निश्चयेन च स्वात्मध्यानमेव सामायिकं । सामायिकमेव व्रतं सामायिकव्रतं । किं, सर्वहिंसादित्यागः सर्वत्र सर्वदा च हिंसादीनां प्रमत्तयोगभाविनां प्राणव्यपरोपणादिपञ्चपापानां त्यागः परिहारः सर्वशब्देन व्याख्यानाद्देशावकाशिकादस्य भेदः सूच्यते । कस्य, शिक्षाव्रतिनः । किंविशिष्टस्य, ध्यातुः संधुरत्वेन तात्पर्येण वा ध्यायतः । कं, स्वमात्मानं अन्तर्मुहूर्तमात्रं धर्म्यध्याननिष्ठत्वेनेत्यर्थः । कस्येव, मुनेरिव सर्वारम्भपरिग्रहरहितत्यागिनो मुनेरिव । क्व, एकान्ते विविक्तस्थाने । कियत्कालं, केशबन्धादिमोक्षं यावत् केशबन्ध आदिर्येषां मुष्टिबन्धवस्त्रग्रन्थ्यादीनां गृहीतनियमकालावच्छेदहेतूनां ते केशबन्धादयः तेषां मोक्षो मोचनं तमभिव्याप्य स्थितस्येत्यर्थः । सामायिकं हि चिकीर्षुर्यावदयं केशबन्धो वस्त्रग्रन्थ्यादिर्वा

मया न मोच्यते तावत्साम्याद्य प्रचलिष्यामीति प्रतिज्ञा करोति ॥ ( साधु-त्वेनेत्यत्र साकल्येनेति पाठभेद ) २८ ॥

सामायिकभावनासमय नियमयन्नाह—

परं तदेव मुक्त्यङ्गमिति नित्यमतन्द्रितः ।
नक्तं दिनान्तेऽवश्यं तद्भावयेच्छक्तितोऽन्यदा ॥२९॥

टीका—भावयेदभ्यस्येन्मुमुक्षु । कि तत्सामायिकमन । क नक्तदिनान्ते नक्त च दिन च नक्तदिने तयोरन्ते निशावसाने दिवसावसाने चेत्यर्थ । कथ, अवश्य नियमेन । अथवा नास्तिवश्य व्याध्यादिपारतन्त्र्य यत्र भावन कर्मणि तदवश्य यथा भवति । किविशिष्ट सन्, अतन्द्रित अनलस । कथ, नित्य सर्वकाल । कुतो हेतो , इति यतो भवति । कि तत्, तदेव सामायिकमेव । किविशिष्ट मुक्त्यङ्ग मोक्षसाधन । किविशिष्ट,परमुत्कृष्ट । परमयक थप्राप्तचारित्रस्यैव साक्षान्मोक्षहेतुत्वसिद्धे ॥ एव तर्हि मध्याह्नादौ तन्न भावयितव्यमिति शङ्कायामिदमाह—शक्तितोऽन्यदति । भावयेन्मुमुक्षुस्तत् । कदाऽन्यदाऽन्यस्मिन्मध्याह्नादौ काल । कथ, शक्तित स्वशक्तिमपेक्ष्य । नियमकालादन्यदाऽपि तद्भावने दोषाभावाद्गुणसद्भावाच ॥ २९ ॥

सामायिकस्थेन परीषहोपसर्गोपनिपाते सति तयोर्जयार्थं किं ध्यातव्यमित्याह—

मोक्ष आत्मा सुखं नित्यः शुभः शरणमन्यथा ।
भवोऽस्मिन्वसतो मेऽन्यत्किं स्यादित्यापदि स्मरेत्॥३०॥

टीका—स्मरेत् ध्यायेत् । कोऽसौ, प्रतिपन्नसामायिक कि तत्, इति एतत् । कस्या सत्या, आपदि विनिपाते परीषहोपसर्गसंसर्गे इत्यर्थ । एतेन प्रतिपन्नसामायिकेन परीषहोपसर्गा सोढव्या इत्याक्षिप्यते । किमेतादित्याह—भवति । कोऽसौ मोक्ष । कि, आत्मा अनन्तज्ञानादिरूपत्वात् । तथा सुख अनाकुलचिद्रूपत्वात् । तथा नित्य अनन्तकालभाविप्रध्वसाभावरूपत्वात् । तथा शुभ शुभकारणप्रभवत्वाच्छुभकार्यत्वाच्च । तथा शरण समस्तविपदगम्यतया अपायपरिरक्षणोपायत्वात् । ससार किंरूप इत्याह—अस्ति । कोऽसौ,

भव स्वोपात्तकर्मोदयवशादनुगंतिविवर्तपरिवर्तन । कथ, अन्यथा मोक्षविपरीतलक्षण अनात्मा दु समनित्योऽशरणमित्यय । अस्मिंश्च भवे । यतनोऽवतिष्ठमानस्य मम किमन्यत्सुखदु स्वादि स्यादभूदस्मि भविष्यति च किंस्वात एव पुन पुनर्भवेदित्यर्थ ॥ ३० ॥

सामायिकसिद्ध्यर्थमन्यत्र श्रावकेण कि कर्तव्यमित्याह—

स्नपनार्चास्तुतिजपान् साम्यार्थं प्रतिमार्पिते ।
युंज्याद्यथाम्नायमाद्यादृते सङ्कल्पितेऽर्हति ॥ ३१ ॥

टीका—युञ्ज्यात्प्रयोजयेत् मुमुक्षु । कान्, स्नपनार्चास्तुतिजपान् स्नपन माभुल्येचादी व्याख्यास्यते, अर्चादयो ज्ञानदीपिकायामत्र च प्रागव्याख्यान व्याख्याता । क, स्नपनार्हान् युञ्ज्यात् अर्हति भगवदर्हद्देवे । किंविशिष्टे, प्रतिमार्पिते साकारस्थापनामवतारिते । कथ, यथाम्नाय उपासकाध्ययनाद्यागमानतिक्रमेण । किमर्थं, साम्यार्थं परमार्थसामायिकसिद्ध्यर्थं अन्यत्र कि प्रयोक्तव्यमित्याह-आद्यादिन्यादि-युञ्ज्यादन्यत्कार्थी । किं तत्, आद्यात्स्नपनात् । ऋते विना अन्यदर्चादित्रय । क, अर्हति । किंविशिष्टे, सङ्कल्पिते निराकारस्थापनार्पिते । एतेन कृतप्रतिमापरिग्रहा सङ्कल्पितार्हत्सामायिकेन से देवसेवाधिकृता इति सूच्यते ॥ ३१ ॥

सामायिकस्य सुदुष्करत्वाशङ्कामपाकरोति-

सामायिकं सुदुःसाधमप्यभ्यासेन साध्यते ।
निम्नीकरोति वार्बिन्दुः किं नाश्मानं मुहुःपतन् ॥३२॥

टीका-साध्यते निष्पाद्यते । किं तत्, सामायिक । कत्र अभ्यासेन भव कृत्यकृत्या । किंविशिष्टमपि, दु साधमपि अतिशयेन निष्पादयितुमशक्यमपि । अत्र दृष्टान्तमाह किं न निम्नीकरोति अनिम्न निम्न करोति । कोऽसौ, वार्बिन्दु । जलबिन्दु । कम्, अश्मानं शिलां । किंकुर्वन्, पतन् । कथ, मुहु वारंवार । अत्र यथा अन्याह -अभ्यासो हि कर्मणां कौशलमावहति । न हि सकृन्निपातमात्रेणोदबिन्दुरपि ग्रावणि निम्नतामाधत्तीति ॥ ३२ ॥

सद्गतिधारणविहारार्थमाह-

त्रिधा धारणकदिने द्वे उपवासदिने चतुर्थी च पारणकदिने प्रत्याख्याने । कस्या, चतुष्पर्व्यां चतुर्णां पर्वणां समाहारश्चतुष्पर्वी तस्यां । मासे मासे द्वयो-रष्टम्योश्चतुर्दश्योरित्यर्थः । कथं, यथागमं आगमानतिक्रमेण । किमर्थं, साम्य-संस्कारदार्ढ्याय साम्यस्य सामायिकस्य संस्कार उत्कर्षस्तस्य दार्ढ्यं स्थिरी-करणं परीषहाद्युपनिपातेऽपि अविचलनं तस्मै । कदा, सदा सर्वस्मिन् काले यावज्जीवमित्यर्थः ॥ ३४ ॥

एवमुत्तमं प्रोषधविधानमुक्त्वा मध्यमं जघन्यं च तदुपदेष्टुमाह—

उपवासाक्षमैः कार्योऽनुपवासस्तदक्षमैः ।
आचाम्लनिर्विकृत्यादि शक्त्या हि श्रेयसे तपः ॥ ३५ ॥

टीका—कार्यः कर्तव्यः । कोऽसौ, अनुपवासः जलवर्जचतुर्विधाहारत्यागः । ईषदुपवासोऽनुपवास इति व्युत्पत्तेः । कैः, उपवासाक्षमैः प्रागुक्तलक्षणमुप-वासं कर्तुमसमर्थैः । तथा कार्यं । किं तत्, आचाम्लनिर्विकृत्यादि । कैः, तद-क्षमैः अनुपवासमपि कर्तुमसमर्थैः । तत्राचाम्लमसंस्कृतसौवीरमिश्रौदनभो-जनं । निर्विकृति विक्रियेते जिह्वामनसी येनेति विकृतिर्गोरसेक्षुरसफलरस-धान्यरसभेदाच्चतुर्धा । तत्र गोरसः क्षीरघृतादिः, इक्षुरसः खण्डगुडादिः, फल-रसो द्राक्षाम्रादिनिष्यन्दो, धान्यरसस्तैलमण्डादिः । अथवा यद्येन सह भुज्य-मानं स्वदते तत्तत्र विकृतिरित्युच्यते । विकृतेर्निष्क्रान्तं भोजनं निर्विकृति । आदिशब्देनैकस्थानैकभक्तरसत्यागादि । हि यस्मात् । भवति । किं तत्तपः । कस्मै, श्रेयसे पुण्याय वा । कया चरितं, शक्त्या बलेन वीर्येण च ॥ ३५ ॥

यथागममित्यस्यार्थं चतुःश्लोक्या व्याचष्टे—

पर्वपूर्वदिनस्यार्धे भुक्त्वाऽतिथ्यशितोत्तरम् ।
लात्वोपवासं यतिवद्विविक्तवसतिं श्रितः ॥ ३६ ॥
धर्मध्यानपरो नीत्वा दिनं कृत्वाऽपराह्णिकम् ।
नयेत्त्रियामां स्वाध्यायरतः प्रासुकसंस्तरे ॥ ३७ ॥

टीका—नयेदतिवाहयेत् प्रोषधोपवासी । कां, त्रियामां रात्रिं । क्व, प्रासुकसं-स्तरे निर्जन्तुकायां भूमौ निर्जन्तुकैश्च तृणदर्भादिभिः कृते शयने । किंविशिष्टः

सन्, स्वाध्यायपरः । एतेन निद्रालस्ये त्यजेदिति लक्षयति । किं कृत्वा, विधाय । किं तत्, आपराह्णिकं अपराह्णभव कर्म मांध्यं त्रिशरुकरमित्यर्थः । किं कृत्वा, नीत्वा अतिक्रम्य । किं सत्, दिनं । किंविशिष्ट सन्, धर्मध्यानपर आज्ञापायविपाकलोकसंस्थानविचयैकाग्रचिन्तानिरोधलक्षणधर्मध्यानपरः । ध्यानोपरमे स्वाध्यायानुप्रेक्षाचिन्तनादिकमपि कार्यमिति परशब्देन प्रधानार्थेन सूच्यते । किंविशिष्टो भूत्वा, श्रित अधिष्ठितः । कां, विविक्तवसतिं विविक्तां प्रासुकां अयोग्यजनरहितां निर्जनां वा वसतिं स्थानं । किं कृत्वा, त्यक्त्वा स्वीकृत्य । कं, उपवासं । किंवत्, यतियत् यतिना तुल्यं यथा यतिर्भोजनानन्तरमेवोपवासं गृह्णाति विधिवत्सूरेश्च समीपं गत्वा पुनरुच्चारयति । सावद्यव्यापारं शरीरसंस्कारमब्रह्म च सदा त्यजति एवं प्रोषधे श्रावकोऽपि प्रवर्ततामित्यर्थः ॥ किं कृत्वा, भुक्त्वा यथाविधि भोजनं कृत्वा । कथं, अतिथ्यशितोत्तरं अतिथेरशितात् भोजनविधापनादनन्तरमतिथिं भोजयित्वेत्यर्थः । क, अर्धे । कस्य, पर्वपूर्वदिनस्य सप्तम्यास्त्रयोदश्याश्च अर्धे प्रहरद्वये वा किञ्चिन्न्यूनेऽधिकेऽपि वा । समेऽप्यसमेऽपि वाऽर्धेऽर्धशब्दस्य रूढत्वात् ॥ ३६।३७ ॥

ततः प्राभातिकं कुर्यात्तद्वद्यामान् दशोत्तरान् ।
नीत्वाऽतिथिं भोजयित्वा भुञ्जीतालौल्यतः सकृत् ॥

टीका—कुर्याद्विदध्यात् प्रोषधोपवासी । किं सत्, प्राभातिकं प्रभाते भवं कर्मावश्यकादिकं । कस्मात्, ततः यथोक्तविधिना प्रहरषट्कनयनादनन्तरं । ततश्च भुञ्जीत भोजनं कुर्यात् असौ । कस्मादलौल्यतः भोजने आसक्तिमकृत्वेत्यर्थः । कथं, सकृदेकवारं पारणकदिनेऽप्येकभुक्तं कुर्यादित्यर्थः । किं कृत्वा, नीत्वा लङ्घयित्वा । कान्, यामान् प्रहरान् । कति, दश । किंविशिष्टानुत्तरान् । अष्टावुपवासगोचराहोरात्रस्य द्वौ चोत्तरदिनस्य । किंवत्, तद्वत् पूर्वोक्तषट्प्रहरवत् ॥ ३८ ॥

पूजयेपवसन् पूज्यान् भावमय्यैव पूजयेत् ।
प्रासुकद्रव्यमय्या वा रागाङ्गं दूरमुत्सृजेत् ॥ ३९ ॥

कर्तुमाह–द्रव्यविशेषवितरण वक्ष्यमाणलक्षणविशिष्टद्रव्यदानं । कस्मै, पात्रविशेषाय । कस्य कर्तुः, दातृविशेषस्य । केन, विधिविशेषेण । कस्मै, फलविशेषाय ॥ ४१ ॥

अतिथिशब्दव्युत्पादनमुखेनातिथिलक्षणमाह—

ज्ञानादिसिद्ध्यर्थतनुस्थित्यर्थान्नाय यः स्वयम् ।
यत्नेनातति गेहं वा न तिथिर्यस्य सोऽतिथिः ॥४२॥

टीका—भवति । कोऽसावतिथिः । य किं, योऽतति सर्वदा गच्छति । किं सन्, गेह दातृगृह । केन, यत्नेन संयमाविराधनेन । कथ, स्वयं आह्वानादिना विना । किमर्थं, ज्ञानादीत्यादि–ज्ञानादीनां सिद्धिः साधन सम्पूर्णीकरण ज्ञानादिसिद्धिरर्थं प्रयोजन यस्याः सा ज्ञानादिसिद्ध्यर्था सा चासौ तनुश्च शरीरं ज्ञानादिसिद्ध्यर्थतनु तस्या स्थितिर्यावदायुरवस्थान सैवार्थं प्रयोजन यस्य तत्तदर्थं तच्च तदन्न च भोजन तस्मै वा । अथवा सोऽतिथिर्भण्यते । उपलक्षणात्पर्वोत्सवो च । नास्ति तिथिर्यस्येत्यतिथिरिति व्युत्पत्तेः । उक्तं च–" तिथिपर्वोत्सवाः सर्वे त्यक्ता येन महात्मना । अतिथिं तं विजानीयाच्छेषमभ्यागतं विदुः " ॥ ४२ ॥

पात्रस्वरूपसंख्या निर्णयार्थमाह–

यत्तारयति जन्माब्धेः स्वाश्रितान्यानपात्रवत् ।
मुक्त्यर्थगुणसंयोगभेदात्पात्रं त्रिधा मतम् ॥ ४३ ॥

टीका—अस्ति भवति । किं तत्पात्र । कतिधा, त्रिधा त्रिभेद । कस्मात्, मुक्तेरर्थो निमित्त कारण, मुक्तिर्वाऽर्थ प्रयोजन येषां ते मुक्त्यर्थास्ते च ते गुणाश्च सम्यग्दर्शनादयो मुक्त्यर्थगुणास्तेषां संयोग सयुज्यमानत्व तेन भेदो विशेषस्तस्मात् । यत्किं, यत्तारयति पार प्रापयति । कान् स्वाश्रितान् दानस्य कर्तृहेतुकर्त्रनुमन्तॄन् । कस्मात्, जन्माब्धेः संसारादर्णवादिव । किंवत्, यानपात्रवत् यानपात्रमम्भोधिस्थ यथा स्वाश्रितान् सांयात्रिकादीन् समुद्रात्तारयति तथा संसाराद्राश्रितान् यत्तारयति तत्पात्रमित्यर्थः ॥ ४३ ॥

एतदेव विशेषयन्नाह—

